Reg. No. C 1073

Vol. XXXIX.
No. 9
३९श-वर्षस्य
९म-संख्या

January 1957
१८७८शकीये
पौषे
मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly ... of the Sanskrit Sahitya Parishat, Calcutta)




महामहोपाध्याय-श्री...पदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1·4 d

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो त्रिषष्ट्यधिकत्रयोदशशततम ( १३६३ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वेयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्
१६८।१, राजा-दीनेन्द्रष्ट्रीट्,
संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha. at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 9 | १८७८-शकीये पौषे ३९श-वर्षस्य ९म-संख्या | January 1957.

## मतिमञ्जरी

### संस्कृतशिक्षा

[ निबन्धकः—श्रीयादवेन्द्रनाथ-राय-न्यायतर्कतीर्थः ]

पशुसामान्यव्यपोहनाय शिक्षा सुतरामपेक्षिता मनुष्याणामिति निर्विवादं मतम्। तत्र पृथिव्यां देशाख्यांशविशेषे शिक्षाविशेषस्य समुपयोगिता दृश्यते। यः खलु जातीयशिक्षादिनाम्ना व्यदिश्यते। शिक्षायाः प्रकर्षो जातेः प्रकर्षं सूचयति। पुरैषा शिक्षा गुरुमुखादुपदेशश्रवणपरम्परारूपासीदतः श्रुतिरिति वेदस्य नामान्तरम्। ततश्च स्मृतिदौर्बल्यं निरीक्ष्य विधात्राक्षराणि सृष्टानि। यानि लिप्यादिनाम्ना व्यवह्रियन्ते। लिप्या भाषा प्रकाश्यते, सा लिपिः सा च भाषा देशविशेषभिन्न-शिक्षावद् भिन्ने। शिक्षा च काञ्चिद् भाषां काञ्चिल्लिपिमधिकृत्य प्रवर्तते साम्प्रतम्। तद्व्यतिरिक्ता या शिक्षा प्रकृतेः समाजतः परिवारतो वाधिगम्यते समधिकसमुपयोगिन्यपि सा शिक्षा नाधुना समालोचनीया। यतो दूरमतिविसृष्टा नैतिकी शिक्षा। यदभावेन मनुष्याः स्वार्थं विहाय नान्यत किञ्चिदवलोक-

यितुं पारयन्ति। सैषाक्षरिकी शिक्षा देशभेदभिन्नेति प्रतिपादिता। यस्यां भाषायां यस्मिन देशे यावन्तः समुत्कर्षसम्पादकाः शिक्षाग्रन्थाः वर्तन्ते सा भाषा तावत्सम्मानार्हा, स देशश्च विशिष्टसभ्यतायाः संसूचकः। भाषातत्त्वविचारणायां प्राचीनरोमकादिभाषावदेषापि संस्कृत-भाषा प्राचीनसभ्यभाषाणामन्ततोऽन्यतमा। नास्तेऽत्र विषये मतभेदः कस्यापीति मन्वानो न भ्रान्तिमार्गे पर्यटति। अस्माकं मते तु संस्कृत-भाषैव प्राचीनतमा या देवभाषेति गीयते। अस्यामेव हि भाषायां ज्ञान-समुद्राभिज्ञानि वेदवेदान्त-दर्शनेतिहास-शिल्पसाहित्य-राजनीति-चिकित्सा-विज्ञानादिविविधग्रन्थरत्नानि प्राचीनतमकालात् प्रभृति विरचितानि। अस्या एव भाषायाः प्राकृतापभ्रंशादिक्रमेण भाषान्तराणि समुद्भूतानि। सेयं सर्वभाषाप्रसविनी संशयपदमारूढाद्यत्वे यत् साभ्यसनीयत्वेन पूजार्हा न वेति। अहो! दुरदृष्टमस्माकम्।

माहम्मदानामाक्रमणात् प्राग् भारतवर्षे प्रतिशतं प्रायः सप्ततिसंख्यकाः शिक्षिता आसन्। तेषां राजत्वकाले संस्कृतभाषावत् पारसिकादि-भाषायाः शिक्षणीयत्वेऽपि तदानीं शिक्षाव्यवस्था नैतादृशी सङ्कटविस्तारासीत् न वैता-दृशी संख्यालघुता जाता शिक्षितानाम्। संस्कृतभाषायाः प्राधान्यं च नापगतमभवत्। ततश्च पाश्चात्यराजशासनकाले क्रमशोऽवहेलिता संस्कृत-विद्या कथञ्चिदनुग्रहपात्रं जाता। ततश्च राजकृत्यपरिचालनार्थमपेक्षिताङ्गल-भाषाशिक्षैव शिक्षापदवाच्या नितरां सम्मानार्हा सत्यधुना लब्धस्वाधीनता-केऽपि राष्ट्रे स्वे महिम्नि प्रतिष्ठितोपहसतीव मिथ्याजातीयतावादविलासि-भारतवर्षम्। पृथिव्यां न सर्वे संस्कृतभाषया मिथः संलपन्ति—संलपि-ष्यन्ति वा,—संस्कृतसंस्कृतेश्छत्रछायायां शयानाः कालं कलयन्ति कलयि-ष्यन्ति वेति तु सत्यं, किन्तु न कापि जातिः पृथिव्यां दृश्यते या स्वकीयां जातीयां भाषां संस्कृतिं सभ्यतां वा परित्यक्तवती। सैषा हिन्दुनामजाति-रेकैव ताः सर्वाः परिहातुं समर्था न तत्र तस्याः सङ्कोचो भीतिर्लज्जा वा। अहो दौर्भाग्यमस्मदादीनाम्।

अधुनापि यद्येषा संस्कृतभाषा हृताधिकारं लब्धुं न शक्नुयात, तदा नास्ते सुखाशंसा भारतीयानाम्। अत्रावस्थाय न वयमन्यदेशवासिन, इति चिन्तयितुमपि शक्नुमो, न वा स्वकीयां संस्कृतिं विहातुं पारयामः,—अथच पाश्चात्यदेशानामौज्ज्वल्येनाकृष्टास्तत्र तत्र पतङ्गा इव वह्निमुखं विविक्षवः परिधावामः। त्रिशङ्कुरिव मध्यवर्तिमार्गमधिरुह्य सुतरां प्रेक्षन्तां प्रेक्षावन्तः कुत्र भारतवर्षं नीयत इति एकदेशदर्शितां दम्भमहङ्कारञ्च प्रविहाय समया दृष्ट्या शास्त्रोपलोचनेनालोकन्ताम् भारतस्य दीनतमामवस्थाम्।

संस्कृतमणिमयपेटिकायां भारतजननीपरिरक्षितं ज्ञानविज्ञानभासुरं महार्घमुपदेशरत्नमादीयताम्। तदेव लोकद्वयसाधिकां शान्तिं जयञ्चाभीप्सितमवश्यमेव प्रदास्यतीति। सतीत्वहानिविह्वलाया भारतजनन्याः परिदेवितमाकर्ण्यताम्। अप्येतैः कलकलैर्मोहशय्याविचेष्टितानां सुषुप्तिरपगमिष्यति?

---

# तथागत-स्वागतम्

निबन्धकः—अध्यापकः श्रीदुर्गादासगोस्वामी, एम. ए. साहित्यशास्त्री

आसन भो भगवंस्तथागत! यदा मूकाबलानां पशु-
व्रातानां रुधिरप्लुताः क्रतुभुवो वर्षे पुरा भारते।
तेषामार्तरवैः सुतीव्र-करुणैर्मर्म स्पृशद्भिः पुनः
सञ्जातं भ्रियमाणमन्तरमपि द्यावापृथिव्योर्महत् ॥१॥
धर्मग्लानिरभूद् यदा पृथुतमा कृतस्ना क्रिया यान्त्रिकी
घोराधर्ममृषाकलङ्ककुहनापङ्के च मग्नाः प्रजाः।

आविर्भूय तदा नृपात्मजमुने ! बुद्ध ! त्वमापादयः
शुद्धं भारतमानसं विकलुषं तीव्रैस्तपोभिः स्वकैः ॥२॥
मैत्रीसाम्यपरां प्रचार्य च शिवां वाणीमहिंसात्मिकां
दिक्षु त्वं नाचरात प्रवर्त्य किल तत् सद्धर्मचक्रं तथा ।
पृथ्वीचित्तमलं युगैरुपचितं प्राक्षालयः सर्वथा
तेनात्मा तरुणः स भारतभुवो मन्त्रैस्तवोद्बोधितः ॥३॥
राज्यान्यभ्युदितान्यशोकनृपतेः श्रीहर्षभूपस्य च
ख्यातानां सदृशामपि क्षितिभुजां धर्मप्रधानान्यहो ।
आसीद् धर्मजयस्ततश्च हिमवत्-काम्बोज-चीनादिषु
श्याम-ब्रह्म-जपान-सिंहल-यवद्वीपादिराष्ट्रेष्वपि ॥४॥
सर्वत्रैव जनैर्धृतौ तव महान् धर्मः शुचिर्वीर्यवान्
वाणी प्रेममयी तथा सविनयं सश्रद्धमप्यादृतौ ।
अर्धं पञ्चसहस्रसौरशरदां सौम्य ! व्यतीतं तव
प्रादुर्भावदिनात परं किल समाचक्रस्य चावर्तनैः ॥५॥
उत्तीर्णा वयमद्य विंशशतकप्रागर्धभागं क्रमा-
दास्तीर्य स्वतनूर्विचित्रघटनास्रोतःसु कालाम्बुधेः ।
हिंसोन्मत्ततमाः पुनः प्रतिदिशं दैत्याः प्रबुद्धा नवाः
सद्यः प्रक्षुभितात समुत्थितमिदं हा ! जीवनाब्धेर्विषम् ॥६॥
देवौघश्चकितस्तथा पशुबलेनोत्तोलितं स्वं शिरो
हिंसा-द्वेष-घृणा-भयार्तमपि भोः ! सन्दिग्धसत्त्वं जगत् ।
विश्वध्वंसपटूनि भीषणतमान्यस्त्राणि विस्फोरका-
ण्यप्याविष्कृतिभाञ्जि सद्मसु रहः शान्तिप्रयासच्छलैः ॥७॥
त्रासाच्छ्वासमसौ निरुध्य गणयत्यन्त्यं क्षणं सभ्यता
पाश्चात्या जड़वादनादमुखरा भोगैकलक्ष्या चला ।
जीर्णा मोहमयी तथा खलु नृणां प्राप्तं परं सङ्कटं
भूयश्च प्रकटीभवत्विह महान् बुद्ध ! त्वदात्मा वनौ ॥८॥

आत्मा ते सुगत ! प्रयच्छतु नवालोकानहिंसासुधा-
सम्पातैरपि दिक्षु जाग्रतु जड़स्तोमाः शनैः कुत्सिताः ।
निर्जीवाः प्रसभं निरस्य निविड़ं दीर्घावसादं पुनः
प्राणस्पन्दचयैर्वितत्य च जगत्यानन्द-शान्ति-श्रियः ॥९॥

अर्हन्नद्य नवानि भारतभुवः शीलानि पञ्च द्रुतं
वध्नन्तु क्षितिवासि मानवगणानच्छेद्य-मैत्रीगुणैः ।
किञ्चैतान् प्रतिबोधयन्तु परितस्त्यागे प्रशान्तौ मिथः
श्रद्धायां सहवर्तने शुभमतौ प्रीतौ सुनीतावपि ॥१०॥

सिद्धार्थ ! त्वमिह प्रवर्तय पुनः सद्धर्मचक्रं शुभं
प्रेम्णा लोकहिताय भीमसमरैर्निःस्वेऽद्य विश्वेऽखिले ।
धावत्स्वर्णमृग-प्रलोभनवशाद्व्यामोह-मासादिते
तत् त्वां शाक्यमुने ! कराञ्जलिपुटैरावाहयामो वयम् ॥११॥

लोको भ्रान्तमतिस्त्वयाद्य भगवन् पुण्याशिषा युज्यतां
येनासौ कृपणः स्वजीवनसुधास्वादं लभेत क्षितौ ।
पूर्यन्तामपि सतक्षतिक्षयचया जीर्णाहिनिर्मोकवत्
तस्य द्वेष-भय-स्मयादिरखिलः पाप्मापि संशीर्यताम् ॥१२॥

---

# श्रीश्रीगीताजयन्त्युत्सवः

संस्कृत-साहित्य-परिषदः कथकतोपसमितेः समुद्योगेन गते मार्गशीर्ष-स्योनत्रिंशदिवसे शनिवासरे परिषदः सभाभवने श्रीश्रीगीताजयन्त्युत्सवः समहासमारम्भं समनुष्ठितोऽभवत् । एतदुपलक्ष्य प्रातः श्रीभगवतः पार्थसारथेः पूजा प्रसादवितरणञ्च जातम्, अपराह्णे तु चतुर्थघटिकायां विदुषां मनोहारिण्येका सभा समाहूता । तत्र किल मनोनीतपूर्वस्य सभा-

पतेरनुपस्थितौ सदस्यानां सर्वेषां सनिर्बन्धानुरोधेन परिषद् आनन्द-बाजारपत्रिकायाश्च सम्पादकाः श्रीचपलाकान्तभट्टाचार्यमहोदयाः सभापतेरासनमलङ्कृतवन्तः। ब्रह्मचारिणा श्रीदेवीप्रसाददेवशर्मणा वैदिकमन्त्रैः श्रीकमलरञ्जनदेवशर्मणा च शिवाष्टकेन मङ्गलाचरणे कृते श्रीमेघनादवसाक-महोदयेनोद्बोधनसङ्गीतं गीतम्। ततः श्रीनिरञ्जनस्वरूपब्रह्मचारिमहोदयेन श्रीश्रीमद्भगवद्गीतायाः पञ्चदशाध्यायस्योच्चैरावृत्तौ कृतायां श्रीहरेकृष्ण-मुखोपाध्यायसाहित्यरत्नमहोदयेन तदीयोद्बोधनभाषणप्रसङ्गेनोक्तं यद् गीताया बीजभूताया एव विस्तारः शाखापल्लवकुसुमराजितो वृक्ष इव महाभारतम्। अतो गीतैव महाभारतस्य सारभूतं तत्वं वेदितव्यम्। अनन्तरं श्रीसुरेन्द्रनाथचक्रवर्ति-वेदशास्त्रिमहोदयेन महामहोपाध्याय-श्रीकालीपदतर्काचार्य-महोदय-रचितस्य गीतायाः पद्यानुवादस्यांशविशेषस्यावृत्तावुच्चैःकृतायां श्रीनारायणचन्द्रगोस्वामिन्यायवेदान्ताचार्य एम-ए. महोदयेन तदीयगम्भीरभाषणे स्फुटीकृतमेतद् यत् श्रीभगवच्चरण-शरणा-गत्यैव गीताया उपक्रमस्तेनैवोपसंहारश्च, अतः श्रीभगवच्छरणागति-रूपायां परायां भक्तावेव श्रीगीतायास्तात्पर्यं परममिति ध्येयम्। श्रीयादवेन्द्रनाथ-राय-न्यायतर्कतीर्थ-महोदयैस्तु तदीयसुचिन्तितभाषणेन स्पष्टीकृतमेतत् यन्निष्कामकर्मयोग एव श्रीमद्भगवद्-गीतायाः परमं तात्पर्यम्, तस्मादस्कैतवं स एव सर्वैर्यथाशक्ति सदानुष्ठेय इति।

अनन्तरं माननीयसभापतिमहोदयस्तदीयमर्मस्पर्शिन्यभिभाषणे एतत् समुद्घोषितवान् यदखिलेऽस्मिन् जगति श्रीगीताया अप्रतिहतः प्रभावो वरिवर्त्ति। लोकमान्यतिलक-स्वामिविवेकानन्द-श्रीअरविन्द-महात्म-गान्धी-प्रभृतयो ये केचनेदानीन्तना अपि मनीषिणः समुपलभ्यन्ते, ते सर्व एव भिन्नभिन्नादर्शाननुवर्तमाना अपि गीतामवलम्ब्यैव स्वकीयजीवन-सरणिमनुसृतवन्तः। अतो गीता आध्यात्मिकजीवने यथैव परमोप-योगिनी तथैव व्यावहारिक-जीवनेऽपीत्यहो गीताया माहात्म्यमिति।

सभान्ते कीर्त्तनकलानिधिः श्रीरथीन्द्रनाथ-घोष-महोदयः स्वसम्प्रदायेन सह स्वीयललितमधुरकण्ठस्वरेण कलहान्तरिताख्यलीलाकीर्त्तनं सुगायन समागतं भक्तनरनारीवृन्दं परिमुग्धीकृतवान। सभायामस्यां प्रायेण पञ्चशतीसंख्याः श्रोतारः समागता आसन।

---

# माणवक-गौरवम्

{ निबन्धकः—श्रीकाश्यपकविः }

( पूर्वानुवृत्तम् )

आरुणिः—अनुगृहीतोऽस्मि। आर्य! अपि कुशलं गुरुचरणानां भवताञ्च ?

कात्यायनः—वयस्य! अथकिम्। एष भगवानाचार्यस्तव सुतरां कालात्ययमीक्षमाणः सोत्कण्ठं त्वां स्मरति। अथ वयस्य! कथमेवं त्वया व्यवसितम् ?

आरुणिः—आर्य! बलवान प्रवाहः। ततो मृत्पिण्डैरनाप्तकामः प्रवाहप्रतिरोधाय गत्यन्तरमनीक्षमाणस्तथाव्यवसायोऽस्मि।

कात्यायनः—आम्! एवम् ? भवतु तिष्ठ मुहूर्त्तं यावदहमकालहीनमाश्रमे स्थितं सोत्कण्ठं भगवन्तं सन्देशप्रदानेन निरुत्कण्ठं करोमि।

आरुणिः—एवं क्रियताम्।

कात्यायनः—( परिक्रामति )।

( ततः प्रविशति सोत्कण्ठो धौम्यः। )

धौम्यः—आश्रमद्वारि क्षणं कात्यायनमारुणिञ्च प्रतीक्षमाणः सुचिरं

नालमभूवं तत्र स्थैर्येणावस्थातुम्। सम्प्राप्तश्चास्मि क्षेत्रमविलम्बेन श्रीमन्तमारुणिं द्रष्टुम्। तदुपसर्पामि। अथ कस्मिन् प्रदेशे आरुणिः प्राप्तव्यः? अथवा मदादेशादत्रैवायातं कात्यायनमाह्वयामि। वत्स! कात्यायन! एवोऽहं धौम्यस्त्वामामन्त्रयामि। तत् क्वासि वत्स!

कात्यायनः—अये! एष भगवानुत्कण्ठित आरुणिमन्वेष्टुं स्वयमेवात्र समायातः! अहो भगवतः शिष्यवात्सल्यम्! (प्रकाशम्) भगवन्! एषोऽस्मि। (उपसृत्य) भगवन्! एष कात्यायनः प्रणमति।

धौम्यः—आयुष्मान् भव। वत्स! अपि दृष्टस्त्वया स्वस्तिमान आरुणिः?

कात्यायनः—अथकिम्। अस्त्यारुणिः सर्वतः कुशली।

धौम्यः—अहो! समुज्जीवितोऽस्मि। तत् कथय क्व मे वत्सः सम्प्रति?

कात्यायनः—एतु एतु भगवान्। एष आरुणिः केदारप्रणालिकायां शयानस्तिष्ठति।

धौम्यः—(उपसृत्य दृष्ट्वा) अहो! आरुणेर्धैर्यं कृत्यनिष्ठा च,—

तथाहि— अन्तस्तोये विग्रहस्यार्द्धभाग-
स्तोयादूर्द्धं भाति भागस्तथान्यः।
वीतस्पन्दे पङ्कलिप्ते शरीरे
श्वासैरेव प्राणसत्तानुमेया॥

भवतु, वत्समामन्त्रयामि। (प्रकाशम्) वत्स! आरुणे! एषोऽहं धौम्यस्त्वामामन्त्रयामि।

आरुणिः—(श्रुतिमभिनीय) अये! एष भगवान प्राप्तः? (प्रकाशम्) भगवन्! अत्राहं शरीरेण जलं निरुन्धानः केदारखण्डे शयितोऽस्मि।

धौम्यः—वत्स! किमद्यापि न प्रशान्तो जलवेगः?

आरुणिः—नैव भगवन्!

धौम्यः—भवतु, तथापि साम्प्रतमेहि वत्स !

आरुणिः—भगवन् ! साम्प्रतमपि केदारखण्डादपसृते मयि सलिलप्रवाहात क्षेत्रमरक्षितं स्यात् । तदिदानीं प्राप्तकालमादिशतु भगवान् ।

धौम्यः—वत्स ! आरुणे ! अलमद्याप्याशङ्कया । उत्तिष्ठ त्वं साम्प्रतमुद्दार्य केदारखण्डम् । अनन्तरं कात्यायनेन सहायभूतेन मृत्पिण्डैरेव सलिलप्रवाहं प्रतिरोद्धुमलं भवितासि । पश्य—

यत् कृत्यं निःसहायेन शक्यं कर्त्तुं न यत्नतः ।
तदेव ससहायेन विनायासेन साध्यते ॥

तद् वत्स ! कात्यायन ! गच्छ, मृत्पिण्डैः क्षेत्रे प्रवेक्ष्यतः सलिलसङ्घातस्य प्रतिरोधे वत्सस्यारुणेः सहायो भव ।

कात्यायनः—यथाज्ञापयति भगवान् । ( आरुणिमुपसर्पति )

( तत आरुणिकात्यायनौ यथादिष्टं कुरुतः । )

धौम्यः—वत्सौ ! अपि साम्प्रतं निरुद्धो जलसङ्घातः ?

उभौ—भगवन् ! अथ किम् ।

धौम्यः—तदागम्यतामिदानीम् ।

उभौ—यथाज्ञापयति भगवान् । ( परिक्रामतः ) ।

आरुणिः—भगवन् ! एषोऽहमारुणिरभिवादये । ( प्रणमति )

कात्यायनः—भगवन् ! एष कात्यायनोऽहमभिवादये । ( प्रणमति )

धौम्यः—सर्वतः स्वस्ति वां भूयात् ।

उभौ—अनुगृहीतौ स्वः ।

धौम्यः—वत्स ! आरुणे ! सम्पूर्णमद्य ते सुदुष्करं शिष्यव्रतम् । तदद्यारभ्य सर्वास्ते विद्याः सरहस्याः प्रतिभास्यन्ति । अपि च केदारखण्डमुद्दार्य मामुपगतोऽसीति तत्सम्बन्धिकठोरव्रतशंसिनी तावद् उद्दालक इति संज्ञा ते लोके प्रचरिष्यतीति ।

कात्यायनः—अहो ! सुतरामनुगृहीतोऽस्मि प्रियवयस्याभ्युदयेन । वयस्य ! आरुणे ! आशीरपि वरो भवति सिद्धानामाचार्याणामित्यवधेहि ।

२

आरुणिः—अहो ! सुतरामनुगृहीतोऽस्मि भगवत्प्रसादेन।

अथवा किं बहुना,—

अद्य मे सफलं जन्म सर्वं पुण्यं फलोन्मुखम्।
तमसो ज्योतिरुद्दीप्तं नीतोऽस्मि गुरुणा यतः॥

धौम्यः—वत्स ! आरुणे ! अत्र न किञ्चिदुपकृतं ते परमेशेन गुरुणा वा स्वतन्त्रेण। कुतः ?

उपभुङ्क्ते फलं जन्तुः स्वकृतस्यैव कर्मणः।
तस्यानुमन्ता साक्षित्वाद् गुरुः स्यादीश्वरोऽथवा॥

तद् वत्स ! सम्प्रति स्वेनैव महिम्ना प्रतिभातनिखिलविद्यः सत्वरमाश्रमं गत्वा समुत्कण्ठितां वो जननीमभिवन्दस्व।

आरुणिः—यथाज्ञापयति भगवान्। भगवन् ! एष प्रणमामि। ( प्रणमति )

धौम्यः—सर्वतः कुशली भूयाः।

आरुणिः—अनुगृहीतोऽस्मि।

धौम्यः—एहि वत्स ! कात्यायन ! यावदावामपि सहैवारुणिना मातरं वः समुपसृत्य तस्यास्तनयसमागमप्रसूतमानन्दं वर्द्धयावः।

कात्यायनः—एवं यथाज्ञापयति भगवान।

आरुणिः—अहो ! भगवत्-प्रसादः !

धौम्यः—अहो प्रवृद्धा रजनी। तथाहि,—

चतुर्थमंशं नभसो व्यतीत्य
पीयूषभानुर्विशद-प्रभाभिः।
हास्यं वितन्वन्निव मोदधाम्नो
ममान्तरस्यानुकृतिं करोति॥

तद् यावदिदानीं गच्छामः।

आरुणि-कात्यायनौ—'जयन्ति नः श्रीगुरुपादरेणवः'।

( निष्क्रान्ताः सर्वे। )

पञ्चमाङ्कः समाप्तः।

# षष्ठाङ्क

## प्रथमदृश्यपटः

तत: प्रविशति भटः।

भटः—अले मणुस्सआ! उच्छरध उच्छरध। एसो महालाओ णिच्चं प्पहादकरणिज्जं णिप्पादिअ मन्तणत्थं रहस्सघलअं गच्छेदि। ता सिग्घं उच्छरध। (निष्क्रान्तः)

(ततः प्रविशति राजा योधमल्लः प्रतीहारी च)।

राजा—अहं हि,—उपास्य सन्ध्यां प्रथमां यथाविधि
प्रदाय चार्घ्यं रवयेऽरुणत्विषे।
कृत्वा च नित्यं शशिशेखरार्चनं
संप्रस्थितः सम्प्रति मन्त्रणागृहम्॥

आहूताश्च तत्र समागमनाय सर्वे मन्त्रिणः सहसा त्रिदिवं प्रति प्रस्थितस्य प्रधानामात्यस्य वामदेवस्य पदे साम्प्रतं को नाम वरणीय इति निर्धारयितुम्। अहो! शोकविदूनेन मनसा स्मरास्यद्य प्रधानामात्यस्य वामदेवस्य लोकोत्तरं गुणपर्यायम्। बहु मार्गणेनापि यः सुदुर्लभः किलान्यत्र। तथाहि,—

धैर्यं नैव विवर्जितं क्वचिदपि व्यापत्ति-कालेऽमुना
जाते चाभ्युदयोदये नयविदा नासादिताहङ्कृतिः।
नासक्तिर्व्यसने क्वचित् समभवत्तस्यातिशुद्धात्मनः
निष्णातः परमर्थशास्त्रविषये सोऽयं यथा भार्गवः॥
स्थैर्यं शैलपतेः पयोधिनिवहाद् गाम्भीर्यमत्यूर्जितं
बुद्धिं दैत्यगुरोर्गुरोर्दिविषदामादाय वाक्पाटवम्।

सूर्याचन्द्रमसोः स्वभावसुलभां कालज्ञतामात्मनः
धात्रासौ प्रकृतिप्रियो विरचितो नूनं धराश्रेयसे ॥
तस्यैव प्रतिभाबलेन महता राज्यं ममात्यायतं
वृद्धिं प्राप विशालवित्तनिवहैर्मे राजकोषः पुरा ।
भव्याभव्यविचारणाभिरभितस्तस्यातिदक्षात्मनः
किं वा भव्यमकारि नैव नियतं सोऽयं गतो हा दिवम् ॥

न हि गणयति शीलं नापि विज्ञानभारं
धनदमपि जयन्तीं सम्पदं वा कृतान्तः ।
स खलु समयदर्शी केवलं हन्ति जन्तून
यदयमसमविद्याशीलवित्तो निरस्तः ॥

तदिदानीम्—

राज्यं मे प्रतिभाति शून्यमखिलं शक्तिः क्वचिन्मे गता
दृष्टाः शत्रुगणाः पुरा किल भयं तस्माद् गता ये भृशम् ।
तत्सौजन्यवशीकृताः प्रतिपदं शोकाकुला मे प्रजाः
प्राज्यं राज्यमिदं ममाद्य सुतरामानन्दबाह्यं स्थितम् ॥

तत् साम्प्रतं तस्य पदे त्वरितमेव तथा कश्चन योग्यः प्रधानसचिवो वरणीयः येन सर्वमनाकुलं सम्पद्येत । भवतु, यावदधुना रहस्यमन्त्रणागारं गत्वा सचिवैः साकं विचार्य कृत्यं समवधारयामि । नूनमेतावता समयेन समाहूताः सचिवा मन्त्रणागृहगता मां प्रतिपालयन्ति । आयतिके ! रहस्य-मन्त्रणागृहमार्गमादेशय ।

प्रतीहारी—इदो इदो एदु भट्टा । ( उभौ परिक्रामतः )

---

द्वितीयदृश्यपटः

( उपविष्टाः सचिवाः । )

शुद्धसत्त्वः—श्रद्धेया अमात्यसुहृदः ! सम्प्रति कर्णधारहीना नौरिव विपन्ना राजश्रीः स्थविरामात्यस्य आर्यवामदेवस्य परलोकप्रयाणेन । तदद्य

को नाम तदीयं रिक्तं पदमुल्लङ्घ्य राज्यस्य स्थितिं निराबाधां विदधीत ?

सुबुद्धिः—मन्ये, तदवधारणार्थमेवाद्य वयमाहूता महाराजेन।

सर्वे—वयमप्येवमेव मन्यामहे।

प्रतिहारी—एदं क्खु रहस्सघरअं। ता प्पविसदु भट्टा।

( ततः प्रविशति राजा प्रतिहारी च। )

सर्वे—(राजानं दृष्ट्वा) जयति जयति महाराजः। (आसनादुत्थिताः)।

राजा—प्रीतोऽस्मि। क्रियतां यथास्वमासनपरिग्रहः।

सर्वे—सोऽयमादौ युज्यते महाराजस्य।

राजा—एष उपविशामि। उपविशन्तु भवन्तः।

( सर्वे स्वं स्वमासनं परिगृह्णन्ति)।

शुद्धसत्त्वः—अथ किमर्थमद्य वयमाहूता महाराजेन ?

राजा—आर्याणामिदमस्त्येव सुविदितं यत् नातिचिरात् पूर्वम् अस्माकं प्रधानामात्यो मतिमानार्यवामदेवः सर्वानस्मान् समुपेक्ष्य स्वर्गमुपगत इति।

सुबुद्धिः—एवम्। विदितमेवेदं सर्वेषाम्।

राजा—अथ तदीये रिक्ते पदे कश्चिदपरः सुयोग्यः प्रधानामात्यो वरणीय इत्येतत् प्राप्तकालम्।

शुद्ध—अत्र कः सन्देहः।

राजा—यद्येवं तर्हि निरूप्यतामसौ मनीषी, यस्तदीये रिक्ते पदे योग्यो वरीतुम्।

शुद्ध—मम मते सर्वतन्त्रस्वतन्त्रः श्रीमानायोदधौम्य एव तत्पदमर्हति।

सर्वे—सम्मतमिदमेव नः सर्वेषाम्।

राजा—ममापि सम्मतं तदेव। असकृद् दृष्टमिदमस्माभिः यत् आर्यः वामदेवोऽपि सन्देहपदेषु सिद्धान्तलाभाय तमेवार्थनीतिपरममाचार्यमन्वपृच्छदिति। बहवश्चास्य विद्यापारंगताः शिष्या मनीषावन्तः

सान्धिविग्रहिका मन्त्रिपदमध्यासीना निष्पादयन्ति राज्यान्तरेषु सप्रशस्तिकमर्थनीतिकृत्यानि। तदयमेवानुनेतव्यः प्रधानामात्यपदपरिग्रहाय ननु ?

सर्वे—अथकिम्। राज्यस्य महते श्रेयसे स एवानुनीय प्रधानामात्यपदं लम्भयितव्यः।

राजा—यद्येवं, तर्हि मया स्वयमेव तदाश्रमं गत्वा दर्शितबहुमानं तत्रभवाननुनेयः।

सर्वे—एवम्। साधीयानयं सङ्कल्पः।

राजा—आर्य्याः! समाप्तं कृत्यं मन्त्रणासभायाः। अथेदानीमवसरो दैनन्दिनसभाकृत्यानाम्। तदतः परं भवतः सर्वान् राजसभायां द्रष्टुमिच्छामि।

सर्वे—यथाज्ञापयति महाराजः।

राजा—आयतिके! राजसभामार्गमादेशय।

प्रतिहारी—इदो इदो एदु महाराओ।

( सर्वे उत्थिताः परिक्रामन्ति )

---

## तृतीयदृश्यपटः

( ततः प्रविशति कात्यायनः सोमरातश्च )।

सोमरातः—आर्य कात्यायन! कथमद्य भगवता नियमेनानध्यायः समादिष्टः ?

कात्यायनः—अपि न जानासि, कियतः कालात् पूर्वं भगवतः परमप्रियो महाराजस्य योधमल्लस्य प्रधानामात्यो वामदेवो नाम दिवं गत इति ?

सोमरातः—जानाम्येव तत्। तथापि किमत्र अनध्यायसमादेशकारणमिति।

कात्यायनः—यदि नावधारयसि, तदाकर्णय । ज्ञानास्येव यथा तत्रभवानार्यवामदेवस्तावदस्मदाश्रममागत्य शास्त्रीयरहस्यसन्देहे सिद्धान्तलाभार्थमन्तरान्तरा भगवन्तं दृष्टवान् । तदा तदा महता शास्त्रार्थविवादेन तयोरुभयोर्मिथः समुपचिता गौरवबुद्धिः प्रणयसमृद्धिश्च प्रशस्यतरा । तेन प्रियसुहृदस्तथा मनीषिणो लोकान्तरप्रस्थानवार्त्तां समासाद्य सद्य एव नियमेनानध्यायमादिश्य प्रातः प्रभृति सुतरां विषण्ण एकाकी विद्यागृहं भगवानध्यास्ते ।

( नेपथ्ये अनध्यायकोलाहलः )।

कात्यायनः—तदेहि यावदिदानीमनध्यायमहोत्सवेन प्रवृत्तं महान्तं कोलाहलं निवर्त्त्य भगवतः शान्तिं परिपालयावः ।

सोमरातः—एवमस्तु । ( उभौ निष्क्रान्तौ ) ( क्रमशः )

---

# वेदान्तविमर्षः

( प्रथमभागः )

[ निबन्धक :—श्रीचारुकृष्णदर्शनाचार्यः ]

(पूर्वतोऽनुवृत्तः)

"सदेव सौम्ये"दमित्युपक्रमात "ऐतदात्म्य"मित्युपसंहाराच्च सत एवात्मनो निःसहायस्य कारणत्वं प्राप्तम् । सद्रूपस्यात्मनो निमित्तोपादानत्वं श्रुतेरेव प्राप्तमित्यपूर्वता । फलं तावत सद्रूपकारणज्ञानान्मोक्षो ब्रह्मप्राप्तिश्च, "आचार्यवान पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रुतेः । "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवये"ति स्मृतिश्चाह । तदुक्तं "तन्निष्ठस्य मोक्षोपदेशादि"ति । "सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवती"त्यर्थवादः । "कथमसतः सज्जायेते"त्युपपत्तिरिति षड्विधलिङ्गैः सत एव कारणत्वं दर्शितम् । तदुक्तम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" ।। इति

न च वाचारम्भणश्रुते र्विकारस्य मिथ्यात्वमिति दर्शितं सूत्रभाष्ये । एतेन ब्रह्मणो नाद्वितीयत्वप्रतिपादने तात्पर्यं प्रकरणस्य किन्तु जगत कारणस्य सत्यत्वप्रतिपादन एवेति दर्शितम् । ब्रह्मणोऽद्वितीयत्वं च सृष्टेः प्रागेव "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमि"त्यग्रे पदश्रवणात, तेन सृष्टेः पश्चात प्राप्तावप्यर्थाद् ब्रह्मणः सद्वितीयत्वस्य, सत्यस्यापि कार्यस्य कारणादभिन्नत्वात सद्वितीयमिवेत्युच्यते "यत्र हि द्वैतमिव भवती"ति, श्वेतकेतोर्गर्वभङ्गमिषेणैकविज्ञानेन सर्वविज्ञानोपपादकसद्ब्रह्मकारणत्व-प्रतिपादनार्थं सदेव सौम्येदमिति श्रुतिः । तथाहि पुत्रस्य श्वेतकेतोर्वैदुष्या-भिमानदर्शनादेवानात्मज्ञत्वं ज्ञात्वा कृपया स्वयमेवात्मज्ञानं सर्वज्ञानमूल-मुपदिदिक्षुः पितोवाच "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवतीति । एतेनैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं भवति । विषयैकदेशविद्यातो निखिलविद्याया एवातिप्रकर्षात सैवातियत्नादर्जयितव्या, सा च सद्रूपात्म-ज्ञानादेव भवतीति भावः । दृष्टान्तेन च प्रतिपादयति "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति । विकारो घटादिर्नाम च वाक्प्रयोगादेवोत पन्नं पश्चाच्च विनष्टं भवति "आपागादग्नेरग्नित्वमि"ति श्रुतेः, कारणं च मृत्तिकासामान्यं नोत्पन्नं नवा विनष्टमिति मृत्तिकेत्येव सत्यम् गौण-नित्यमाप्रलयं सत्त्वात, अतो मृत्तिकासामान्यस्य सर्वत्रानुगतत्वात् मृत्तिका-सामान्यज्ञानादेव सर्वमृन्मयविज्ञानं भवति । एवं परमकारणब्रह्म-विज्ञानादेव तद्विकाराखिलप्रपञ्चविज्ञानं भवतीति सत्कारणत्वप्रतिपाद-नार्थमेव सदेव सौम्येदमि"ति वाक्यमप्रपञ्चोपन्यासः । तद्विज्ञानाच्च परमफलं मोक्षो भवत्येवेति हृदयम् ।

( क्रमशः )

---

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4-for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for member-

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramas nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M, A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri. M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs, 5; Rs, 4-8 (for members).

13-7-57

Reg. No. C 1073

Vol. XXXIX. February 1957

No. 10 १८७८शकीये

३९श-वर्षस्य माघे

१०म-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4 d

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो विषष्ट्यधिकत्रयोदशशततम ( १३६३ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

## Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha.at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta,

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 10 | १८७८-शकीये माघे ३९श-वर्षस्य १०म-संख्या | February 1957.

## मतिमञ्जरी

### श्रीश्रीभाषापूजाविलासः

[ निबन्धकः—श्रीयादवेन्द्रनाथ-राय-न्यायतर्कतीर्थः ]

वाल्मीकिप्रमुखाः पुराणकवयो यत्पादसेवाव्रतै-
र्धन्या, आदिकवेः कवित्वधिषणा यां प्राप्य काष्ठां गता ।
सा भाषा मनुशासितेऽवनितले सेव्या न वा चिन्त्यते
सत्पुत्रैरधुना, वयं तु विवशास्तां पूजयामो ध्रुवम् ॥

दृश्यते सर्वेषां सर्वत्र सुपुत्त्राणां धनवतां हर्म्येषु महाविद्यायतनेषु महासमारोहेन भाषाजनन्याः पूजाविलासः । लब्धा वा केन समधिकधनविनिमयेन चिन्मय्या मातुर्मृन्मयी प्रतिमा । शिल्पकला वा कस्य शिल्पिनः प्रकर्षं प्राप्ता । केन वा साडम्बरं पटहादिवादनपुरःसरं यन्त्रनियन्त्रितयानेन सा समानीता शिल्पकलाभवनात् ; विसृष्टा चालोकसज्जाविलासेन तथाभूतेन च समानयनगौरवेन नगरं परिभ्राम्य ; संवादपत्रेषु कस्याः प्रतिमाया आलोकचित्रादिकं प्रकाशितं श्रेष्ठत्वं प्रतिपादितञ्च

समालोचनायामित्यादयः साम्प्रतं श्रीपूजायाः प्रकर्षसूचकाः। सुप्रसिद्ध-वञ्चकैः ब्राह्मणैस्तावद् "देवद्रव्यं द्विजे दद्यादि"ति कृत्वा पूजाद्रव्याणि गृहं नीयन्ते सुतरां तत्र तत्रावश्यं करणीय एव व्ययसंक्षेपः। इतिकर्तव्यताया अयं क्रमः प्रायो दरीदृश्यते—तथाचैवम्भूतेऽनेहसि—

स्वच्छं सौधतलं विहाय जननि ! प्रज्ञावतां श्रेष्ठिनां
भक्तानामुटजे विलासरहिते यातुं मनो धावति ?
हंहो कालवशान्नु चित्तविकृतिर्जाता तवापि क्वचि-
दित्येवं परिभाव्य भीतमनसास्तीर्णं हृदब्जासनम् ॥
शुद्धं तत्, तव चिन्तने रतिवशात् सत्त्वाश्रितं शान्तिदं
दारिद्र्येण निपीडिता यदि ततुः क्लेशं न धत्ते मनः।
भृङ्गो वाङ्घ्रिसरोरुहेऽमृतरसं पीत्वातिमत्तं पुनः
सान्निध्यं सुखदं सदैव मनुते शारीरकष्टं दधत् ॥

तदेहि जननि! दुर्मणायमानानां विकलं चित्तं क्षणमपि चरणामृत-सेचनेन सञ्जीवय। क्षणमप्येते नितरामुपेक्षिता जनाः शान्तिं लभन्ताम्। यथैव तव वहिरङ्गपूजायामान्तरिकताया दरिद्रता—तथैव निरन्तराभ्यास-रूपायामन्तरङ्गपूजायामपि। अस्माकं विह्वलपरिदेवितोक्षराणि न किं करुणाकलितान्तराया मातुर्हृदयमालोड़यति ? अथवा परिदेवनमिदं निरर्थ-कमुपहासास्पदञ्च। यत्रैव देवभाषा प्रकाश्यते—तत्रैव सदःसु प्रायो जनानां नासिकाकुञ्चनादिविकारः परिलक्ष्यते। कियन्ति वा दिनान्येवमु-पेक्षितास्ते दीनतनयाः प्राणान धारयिष्यन्ति ? अपि मिथ्याभूतानि शास्त्राणि ? यत्र विविधान्युपदेशरत्नानि सन्ति ? अप्येतानि न रत्नानि ? एवं सति कदाचिदप्यस्माकमपि तेष्वनाश्वासः स्यात्! किमुच्यते ? सर्वाणि शास्त्रोपदिष्टानि रत्नान्यमृतमयानि च। यदि मोहवशादुपेक्ष्यते तदा तेनामृतत्वं न कदाचिदपि लभ्यते। अपि न दृश्यते दीनपुत्त्रैः—संसारस्तावदशान्तिपावकदंदह्यमानः सान्निपातिकं विकारं दधदितस्ततो विचेष्टते। जगति भेषजानि सन्तीति किं व्याधयो-

ऽपगमिष्यन्ति ? व्याधाः सन्तीति किमरण्यात् श्वापदाः पलायन्तेऽतोऽमृतमस्तीति किं सर्वेऽमरा भविष्यन्ति ? अपि न शास्त्रचिन्तनव्यसनपरायणतया श्रीमतां दीनतापगतासीत् ? अपि न राजपदं तुच्छं विभाव्य श्रीमद्भिरेव राज्यपरिचालकपदं गृहीतम् ? तदानीं दीनता नासीदधुना दीनताधिगता ? श्रीमद्भिरेव विलासं तुच्छीकृत्य कृच्छ्रं तपः शान्तिदमिति कृत्वा न समाचरितम् ? अहोऽधुना श्रीमन्त एव मां विहायापातरम्ये भोगसागरेऽवगाहनाय प्रयतन्ते । सुतरां का नाम शान्तिकथा ?

---

# वाणी-स्तोत्रम्

निबन्धकः—श्रीदुर्गादासगोस्वामी, एम. ए. साहित्यशास्त्री

यस्याः श्रीपदपङ्कजद्वयमनुध्यायन्त एवानिशं
ब्रह्माद्या अपि हृद्यपद्यरचनैः सिध्यन्ति वागीश्वराः ।
वाचस्पत्यमपि प्रयान्ति च बृहस्पत्यादयः पर्षदि
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥१

यस्याः स्निग्धकटाक्षतः कविकुलाजीव्यावुभौ सम्मतौ
श्रीव्यासोऽद्भुतधीस्तथाद्भुतगुणो वाल्मीकिराद्यः कविः ।
लोके चाप्यगमन् महाकविपदं श्रीकालिदासादयः
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥२

पाणिन्यादि-पतञ्जलिप्रभृतयः सूत्रार्थकृच्छाब्दिकाः
श्रीमच्छङ्करमुख्यतत्त्वपटवो यस्याः कृपातोऽभवन् ।
कौटिल्यश्चरको वराह-भरतौ वात्स्यायनाद्या अपि
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥३

साङ्गाम्नाय-पुराण-तन्त्र-कविताऽलङ्कार-कोशस्मृति-
व्याख्या-वैद्यक-नीति-दर्शन-कला-विज्ञान-शिल्पादयः ।
यस्या विस्फुरितानि भान्ति भुवने विद्याः प्रवीणा नवाः
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥४
या देवी शुचिकुन्दसुन्दरतनुर्या श्वेतहंसासना
या व्याकोषसिताम्बुजार्पितपदा ज्योत्स्नावदातच्छविः ।
विश्वद्ग्रन्थविपश्चिका च भजतां भोगापवर्गप्रदा
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥५
या देवी विधिविष्णुशङ्करमुखैर्देवैर्महेन्द्रादिभि-
र्दिक्पालैर्वसुभिर्मरुद्भिरसुरैः सिद्धैर्नरैस्तापसैः ।
कर्मिज्ञानियतीन्द्रभक्तनिकरैरण्यादरात् स्तूयते
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥६
या वाग्भिर्हरति त्रिलोकतिमिरं वाग्ब्रह्मरूपाऽनघा
स्वच्छाभिद्युतिभिर्यथा घनतमःस्तोमं समन्तात् ततम् ।
वीणानिक्वणतः प्रयच्छति परानन्दञ्च गीतोद्भवं
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥७
या शश्वत् सदसद्विवेकविमला मात्रार्धमात्रात्मिका
या शब्दार्थतनू रसध्वनिगुणालङ्कारभावोज्ज्वला ।
सद्वृत्ता सनया सदन्वयवती सन्मानसोल्लासिनी
स्वान्तध्वान्तविनाशिनी भवतु नो भव्याय सा भारती ॥८
श्रीदुर्गादासविप्रस्य वाणीस्तोत्रमिदं शुभम् ।
कुन्ददामेव भारत्याः कण्ठेऽस्तु सुधियां सदा ॥९

---

# *गीर्व्वाण-वाण्या जय-यात्रोद्‌घोषण*

[ निबन्धकः—श्रीताराप्रसन्नतर्कतीर्थः ]

धीमन्तः सुरभारतीं जययुतां कर्त्तुं समुद्योगिनः,
पन्थानो भवतां शिवा भगवतः कारुण्यतः सन्तु भोः ।
साफल्यं भवतां विभोः पदयुगे संप्रार्थ्यते साम्प्रतं
यात्रा वो भवतात समुद्यमयुता संसिद्धिसम्मण्डिता ॥१

यास्माकं सुरभारती सुरसरितुल्या सदा भारते,
भाषाणां परिपुष्टये परिस्रुता लुप्ता भवेत सा यदि ।
सर्व्वा एव कृशा भवेयुरचिरात प्रादेशभाषास्ततः,
सर्व्वान्तःकरणैर्विधेयमधुना तस्या हितं सर्व्वथा ॥२

या भाषा मधुरा सुधेव सततं संसेव्यते सज्जनैः,
ब्रह्मज्ञा ऋषयो ययैव सततं मन्त्रादिकं संजगुः ।
आर्याणां हृदयं सदैव सरसं सम्पोय यस्या रसं
तस्या उन्नयनं सुनीतिशरणाः कुर्व्वन्तु सन्तः शुभम् ॥३

या नित्यं दुहितेव दीनविबुधैः सम्पाल्यते यत्नतः
सर्वस्वं परिहाय वक्षसि धृता या पाल्यते मादृशैः ।
यस्यास्तत्त्वसुधां निपीय सततं दुःखेऽपि सौख्यं सतां
सेदानीं पुनरुन्नतिं व्रजति भोः सर्वैः समुल्लस्यताम ॥४

---

* वङ्गीयसंस्कृतशिक्षापरिषदि पुनाविश्वविद्यालयस्योपाचार्यमहोदयानां शुभागमनमुपलक्ष्य पठितम् ।

# महाजनसमागमः

विदितं खलु श्रीमतां यद् भारतगतस्य संस्कृताध्ययनस्य साम्प्रतिकीं समवस्थां सर्वदिश्यां परिशीलयितुं १९५६ खिस्ताब्दस्याक्टोबरमासे भारतीयेनाधिशासनेन संस्कृतायोगः कश्चन नियुक्तः। यत्र इमे विशिष्ट-शिक्षाव्रतिनो महाभागाः सदस्यत्वेन निर्दिष्टाः—

(१) पश्चिमवङ्गविधानपरिषत्सभापतयः सुगृहीतनामानो डक्टर-श्रीसुनीतिकुमारचट्टोपाध्यायमहोदयाः अध्यक्षा (२) मुम्बइपत्त-नस्थभारतीयविद्याभवनसञ्चालकाः पण्डितप्रकाण्डाः श्रीमन्तो जयन्त-कृष्णहरिकृष्णात्मजदवेमहोदयाः (३) कलिकाता-संस्कृतमहाविद्यालये गवे-षणाविभागे प्रधानाध्यापकचरास्तथाधुना यादवपुरविश्वविद्यालये प्राध्यापक-पदमलङ्कुर्वाणाः प्रवीणतमभाषावेत्तारो डक्टर-श्रीसुशीलकुमार-दे-महोदयाः (४) वाराणसी-हिन्दु-विश्वविद्यालये 'सयाजीराव-गाइकवाड़'-भारतीय-सभ्यतासंस्कृतिप्राध्यापका विद्वद्वरेण्या डक्टर-श्रीतिः रा-वेङ्कटाचलमूर्तयः (५) मान्द्रासविश्वविद्यालयस्थ-संस्कृतप्राध्यापका विश्रुत-कीर्तयो डक्टर-श्रीवे-राघवमहोदयाः (६) वेङ्गलुरशाङ्करमठा-स्थानविद्वांसः पण्डितराजोपाधिविभूषिताः श्रीमन्तो वे-सु-रामचन्द्र-शास्त्रिपादाः (७) होशियारपुरविश्वेश्वरानन्दवैदिकसंशोधनमन्दिर-सञ्चालका अनुष्ठानपरायणाः प्राध्यापकाः श्रीमन्तो विश्वबन्धुशास्त्रिपादाः (८) पुना-विश्वविद्यालय-संस्कृत-प्राध्यापकाः संस्कृतविद्याप्रणयिनो डक्टर-श्रीरामचन्द्रनारायनसूनु-दाण्डेकर महोदयाः सदस्य-सचिवाः।

एते खलु महाभागा विविधसंस्कृतप्रतिष्ठानेषु संस्कृतशिक्षाविषयकं साम्प्रतिकमानुकूल्यं विलोकयन्ति। केचनैतेषु संस्कृतसाहित्यपरिषदि समा-

याताः। समागत्य चात्रत्य-ग्रन्थागारे विविधान प्रकाशितान संस्कृतभाषामयान दुर्ल्लभान ग्रन्थान प्रकाशनार्थं नानाग्रामाभ्यन्तरात् कृच्छ्रेण संगृहीतानि हस्तलिखितान्यप्रकाशितानि दुष्प्राप्याणि ग्रन्थरत्नानि चावलोक्य नितरां मुदं प्रकाशितवन्तः। तेषां संस्कृतभाषां प्रति संस्कृतशास्त्रं प्रति प्रगाढमनुरागमधिगम्य सर्व्वे खलु तत्रत्याः समवेताः सदस्या एतेषामेतदनुशीलनद्वारा भारते वर्षे पुनः संस्कृतभाषा संस्कृतिश्च स्वस्थानमधिगमिष्यतीत्याशया निर्व्याजं यदानन्दं प्रकटितवन्तस्तेन तदानीं परिषद्येक आनन्दमयः परिवेशो जातो यस्तावदद्युनापि स्मृतिपथमारूढः संस्कृतभाषायाः साहित्यस्य संस्कृतेश्च विजयं समुद्घोषयति। तदस्माभिः सर्वेभ्यस्तेभ्यो धन्यवादेन सम्मानंवितीर्य भारते पुनः संस्कृतस्य स्वर्णसिंहासनेऽधिरोहणदिनं साग्रहं प्रतीक्ष्यते शिवञ्च सर्वेषां तेषामीशचरणे समाशास्यते।

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## षष्ठाङ्के

### चतुर्थदृश्यपटः

( ततः प्रविशति विषण्ण आसनस्थो धौम्यः )।

धौम्यः—( स्वगतम् ) अहो! प्रियसुहृदो मे विविधशास्त्राचार्यस्य वामदेवस्य परलोकप्रस्थानेन सुतरां शोकपर्य्याकुलोऽस्मि। स खलु महामनीषी—

पदं विविधविद्यानां सौजन्यस्य महायनम्।
जीवो वाचि नये शुक्रो वसुधाया महावसु॥

तदिमं हृतवता कृतान्तेन महती हानिः संसाधिता वसुन्धरायाः ! यस्याः प्रयत्नशतैरपि दुष्करः प्रतीकारः ।

राज्यस्यास्य हितायामे स एवासीत परं वलम् ।
तेनाद्य रहितं राज्यं कस्य वा सुखमीक्षताम् ॥

अथवा नियतं सह्या नियतिरसत्-प्रतिपक्षा । सा हि

कस्यापीष्टमनिष्टं वा स्वकृत्ये न व्यपेक्षते ।
स्वकृत्यं सा करोत्येव यथाकालं निरङ्कुशा ॥

तदस्मिन्नपरिहार्ये वस्तुनि—

वृथैव शोको लोकानां वृथा दैवतनिन्दनम् ।
सर्वमापतितं सह्यमिति नीतिविदां स्थितिः ॥

( ततः प्रविशति कात्यायनः )

कात्यायन—भगवन् ! एष कात्यायनोऽहमभिवादये ।

धौम्यः—वत्स ! कात्यायन ! ससम्भ्रमो लक्ष्यसे । तद् वार्त्तामभिधेहि ।

कात्यायनः—भगवन् ! आश्रमद्वारि सोपाध्यायो राजा योधमल्लः समुपस्थितो भगवतः पादौ वन्दितुमिच्छति ।

धौम्य—राजा योधमल्लः ?

कात्यायनः—अथ किम् ।

धौम्यः—तत सवहुमानं त्वरितं प्रवेशय ।

कात्यायनः—यथाज्ञापयति भगवान् । ( निष्क्रान्तः ) ।

धौम्यः—कथं नाम पूर्वमसंसूच्यैव सहसा सोपाध्यायस्य राज्ञ आश्रम-प्रवेशः ? तदेतेन चिन्ताकुलोऽस्मि । कुतः ?

गुरुकार्यं विना राज्ञो नाश्रमोपस्थितिः क्षमा ।
अधिकारे नियोगं मे किन्तु राजाभिवाञ्छति ?

यद् भवतु तद् भवतु, राज्ञः सम्मानपरिपालनाय यावदाश्रम-द्वाराभिमुखमुपसर्पामि । ( यथोक्तं परिक्रामति । )

( ततः प्रविशति कात्यायनेन समं सोपाध्यायो राजा )।

कात्यायनः—अयं भगवानस्मदुपाध्यायो महाराजं सोपाध्यायमपेक्षमाणो विद्यागृहद्वारमधितिष्ठति। तदुपसर्पतु महाराजः।

उभौ—(उपसृत्य) भगवन्! अभिवादयावहे।

धौम्यः—अहो भाग्यमहोभाग्यं सुप्रभाताद्य यामिनी।
महापुण्यवलोपेयं येनाप्तं राजदर्शनम्॥

जयति जयति महाराजः। इमे आसने, अधितिष्ठतां भवन्तौ।

उभौ—आदौ भवानुपविशतु।

धौम्यः—नहि नहि, आदौ समुचितमासनमतिथीनाम्।

राजा—युज्यते। (सर्वे उपविशन्ति) भगवन्! अपि कुशलं विद्याप्रदान-व्रतस्य?

धौम्यः—सद्व्रत-परिरक्षणाय नियतं जागरूके महाराजे कथं विद्यादान-व्रतस्याकुशलं नाम?

तथाहि,—

तत्त्वज्ञाने समुत्पन्ने कथमज्ञानमात्मनि।
सहस्रकिरणे दीप्ते कथं तिमिर-सम्भवः?

राजा—(स्वगतम्) अहो! साम्प्रतमेवमायोदधौम्येन स्तुवता सुतरामर्थ-वान् मे राजशब्दः। (प्रकाशम्) भगवन्! अतिमात्रं व्रीडितोऽस्मि तथा गुणातिवादेन भगवतः।

धौम्यः—देव! तथ्ये वस्तुनि समुदाहृते का व्रीड़ा। भवतु, पृच्छामि, अप्यनामयं सर्वतो देवस्यायुष्मतः?

राजा—भगवन्! कुतः सर्वतोऽनामयम्? राज्यस्यैकालम्बनभूतेनार्ष्य-वामदेवेन वियुक्तो नक्तन्दिवं निरतिशयं दुःखमनुभवामि।

धौम्यः—युज्यते। वयमपि तस्य प्रियसुहृदो वियोगेन तथैव दुःखिता वर्त्तामहे। तथापि किमत्र क्रियताम्? अशक्यप्रतीकारः खलु नियतिव्यापारः।

राजा—कथञ्चिदिदमेव शोचतां शोकलाघवायालम् । तदिदानीं तदीय-रिक्तपदपरिग्रहाय भगवन्तं शरणं गतोऽस्मि । नास्त्यन्यः शरणं मे तदत्ययेन विपन्नस्य । एतदवधानेन विपन्नं मामनुग्रहीतुमर्हति भगवान् ।

धौम्यः—महाराज ! तदत्ययेन भवान् विपन्न इत्युपपन्नमेव । किन्तु अहं तदीयं रिक्तं पदं पूरयिष्यामीति मदीयनित्यकृत्यस्थिति-विचारेण नोपपद्यते । येन भवता तथा याच्यमानेनापि मया न शक्यते गौरवमिदमभ्युपगन्तुम् ।

राजा—कथमिव ?

धौम्यः—राजन् ! श्रूयताम्, सन्ति मे प्रातरारभ्य निशायाः प्रथमयामं यावत् नैरन्तर्येण नियतानि कृत्यानि । यानि नियमेन निष्पादयतो मे नाल्पोऽप्यवसरो भवति कृत्यान्तरनिष्पादनस्य । विशेषतश्च स्वाधीनवृत्तिमुपेक्ष्य पराधीनवृत्तिमत्यायासकरीं नेच्छामि ।

कात्यायनः—अहो ! त्यागशीलता भगवतः ! यया तावदेवमयाचितो-पनतं राज्ञः प्रधानामात्यपदाधिकारमपि तृणाय मन्यमानः प्रत्याचष्टे ।

राजा—भगवन् ! तत्र प्रधानामात्यपदाधिकारे पराधीना वृत्तिरिति न विभावयितुमर्हति । कुतः ?

सर्वं राज्यं करायत्तं तवैव भविता तदा ।
भृत्यवद् योधमल्लोऽपि तवाज्ञां पालयिष्यति ॥

धौम्यः—राजन् ! निरुपप्लवा धर्मनीतिः सोपप्लवा चात्यर्थमर्थनीतिः । तामिमां धर्मनीतिमेकान्तेन चेतसा संसेवमानाय न रोचते कथमप्यर्थनीतिमयी जीवनयात्रा । तदत्र मां क्षन्तुमर्हति प्रसन्नो महाराजः ।

उपाध्यायः—आर्य धौम्य ! एवं सति सम्भवे कथं नु भवता नापोह्यते महादैन्यप्रभवं दुःखम् ?

धौम्यः—उपाध्याय ! दुःखमित्यपरिचितं वस्तु धौम्यस्य। वृद्ध-महाराजेन वितीर्णेषु क्षेत्रेषु शिष्याणां यत्नेन स्वावधानेन च प्रभूतानि शस्यानि जायन्ते। आश्रमसन्निहितोद्यानेषु शाकफल-मूलादीनि सम्भवन्ति। गावः प्रचुराणि क्षीराणि ददति। भिक्षयापि शिष्या ब्रह्मचारिणः प्रभूतानि वस्तून्युपनयन्ति। तदेतै-रेवोपकरणैः सुखेन वृत्तिलाभात् कुतो मे दुःखस्य नामापि। एवं स्वाधीनवृत्तिलाभेन यथाकालं नित्यकृत्यानि परःशतेभ्यः शिष्येभ्यो विद्याप्रदानव्रतञ्चानुतिष्ठतो मे महता सन्तोषामृतेन परितृप्तमन्तः-करणं सुखार्थमुपकरणान्तरं नापेक्षते।

उपाध्यायः—आर्य धौम्य ! विस्मयेन मुग्धोऽस्मि। एवं त्यागशीलेन भवता सुगतोऽपि नूनं पराभूतः।

राजा—कः सन्देहः ? तदतःपरं नास्ति मे निर्वन्धः। किन्तु आदि-शतु मां भगवान्,—क इदानीमन्यः प्रधानामात्यपदं लम्भयितु-मभ्यर्थनीय इति।

धौम्यः—महाराज ! एवं भवता पृष्टो वक्तुमर्हामि।

राजा—कथयतु भगवान्।

धौम्यः—देव ! श्रूयताम्,—अस्ति काञ्चनपुरवास्तव्यो ब्रह्मबान्धवो नाम मदीयः प्रथमः शिष्यः। स किल नानाशास्त्रपारङ्गमो विशेषतः प्रतिभानवानर्थशास्त्रतत्त्वेषु। वयसा ज्ञानेन चासौ सुतरां वाम-देवमनुकुरुते। निरालम्बो बहुपरिजनश्च सोऽयं भूयांसं खेदं प्रतिपद्यते दारिद्र्येण। तदसंशयमयं भवता प्रार्थितः कृत्यभार-मङ्गीकरिष्यति। कुतः ?

पिपासाक्षामकण्ठेन निदाघार्त्तशरीरिणा।
नैवोपनीतं पानीयं स्वच्छं शक्यमुपेक्षितुम्॥

राजा—का गतिः ? भगवता समुपेक्षितस्तमेव शरणं गच्छामि। यतः,—

अनासाद्य महानद्याः स्वच्छं तोयं पिपासितः ।
नोपगच्छति किं तोयं लिप्सुः क्षुद्रं जलाशयम् ?

धौम्यः—राजन् ! मैवं मंस्थाः । स हि ब्रह्मबान्धवो मदीयः शिष्योऽपि सर्वथा मामनुकरोति । तेन भवदीयप्रधानामात्यपदं गृहीतवता सुतरां समृद्धं भवतो राज्यं भवितेत्यत्र नास्ति सन्देहः ।

राजा—यद्येवं भगवतो निश्चयस्तदा श्व एव तत्रोपाध्यायसहितं कञ्चन सचिवं प्रेषयिष्यामि ।

धौम्यः—एवमस्तु ।

राजा—भगवन् ! धन्यमिदं मदीयं राज्यं यत्र भवादृशो निष्कामः स्वकृत्यानुष्ठाननिरतो वरीवर्ति । तदिदानीं गृह्यतां राजकार्यानुरोधेन त्वरया प्रस्थातुमिच्छतो मे प्रणतिपर्यायः । (प्रणमति) ।

उपाध्याय :—भगवन् ! गृह्यन्तामस्य ममापि प्रणतयः,

धौम्यः—सर्वथा स्वस्त्यस्तु वां देवताप्रसादात् ।

उभौ—इदानीमनुमन्यतां भगवानावयोः प्रस्थानम् ।

धौम्यः—एवमनुमन्यते पुनर्दर्शनाय ।

उभौ—सर्वथानुगृहीतौ स्वः । एतावावां गच्छावः ।

धौम्यः—एवमस्तु ।

उभौ—( यथाविधि सम्मानप्रदर्शनाभिनयेन निष्क्रान्तौ ) ।

धौम्यः—वत्स ! कात्यायन ! अप्याश्रमाद् बहिर्यातो राजा सोपाध्यायः ?

कात्यायनः—भगवन ! अथ किम् ।

धौम्यः—तदुज्जीवितोऽस्मि महोपप्लवान्मुक्तः । इदानीं,—

सूरो दूरं गतो दृष्टे भूपो म्लानमुखो यथा ।
उपेतां पश्चिमां सन्ध्यामुपासितुमयं क्षणः ॥

तदेहि, यावदधुना निरुपप्लवेन मनसा पश्चिमां सन्ध्यामाराधयामः ।

कात्यायनः—यथाज्ञापयति भगवान् । ( परिक्रामतः) ।

---

# सप्तमाङ्के

## प्रथमदृश्यपटः

( ततः प्रविशति धौम्यस्तत्पत्नी च ) ।

धौम्य—गृहिणि ! महता सौभाग्येनास्माभिः आरुणिकात्यायनोपमन्यु-प्रमुखाः शिष्याः समासादिताः । एतैरेव धौम्यस्य मे गुरोः सुमहती प्रतिष्ठा । तथाहि,—

शिष्याणां महिमानमुज्ज्वलतमं दृष्ट्वा प्रसन्ना जनाः
प्राशस्त्यं गणयन्ति किञ्चन गुरोः सौभाग्ययोगोदितम् ।
शिष्यास्ते सुकृतेन योग्यगुरुभिः काले समासादिताः
विद्यायाश्चरितार्थतां विदधति श्रान्त्यार्जितायाः गुरोः ॥

किञ्च, ते यदि भक्तिपरीताः सौरभयोगस्तदा सुवर्णे स्यात् ।
भाग्यान्मम समुपेतः सद्गुणहेतुः समस्तोऽयम् ॥

पत्नी—आर्यपुत्र ! सत्यमेतैरेव पुत्राधिकैरात्मानं कृतकृत्यं मन्यमाना पुत्राजनिदुःखमपि नानुभवामि ।

धौम्यः—युज्यते । औरसाद् वंशविस्तारात सुतरां प्रशस्यते किल विद्याकृतो वंशविस्तारः । अत एव,—

प्रतिभानमयं शिष्यं भक्तिसम्भारसम्भृतम् ।
मन्यन्ते गुरवः प्रीताः पुत्रेभ्योऽधिकमन्वहम् ॥

पत्नी—एवमिदम् । आर्यपुत्र ! अथाधुना प्रसङ्गतः पृच्छामि, क नु खल्वद्य गतः प्रियः पुत्रोऽस्माकमुपमन्युः ?

धौम्यः—प्रिये ! किमेवमद्य पृच्छसि ?

पत्नी—आर्यपुत्र ! न जाने कथमद्य पुत्रमुपमन्युमधिकृत्य दृढं पर्याकुलं मे हृदयम् ? स हि प्रतिदिनं सह गोभिरनतीत्यैव प्रदोषमाश्रमे

प्रत्यावृत्य पुरस्तादावयोः पादौ स्पृशति। अद्य तु समतिक्रान्ते प्रदोषे प्रत्यावृत्तास्वपि सकलासु गोषु तं तथा कुर्वन्तं न पश्यामीति भृशं चिन्तितास्मि।

धौम्यः—आम्! एवम्। तमिमं तस्य नियमं स्मारयन्ती भृशं मामपि चञ्चलीकरोषि। भवतु तावत्, कात्यायनमामन्त्र्य ज्ञाततत्त्वो भवामि। (नेपथ्याभिमुखीभूय) वत्स! कात्यायन! कात्यायन! इतः सत्वरमेहि।

(नेपथ्ये) कात्यायनः—भगवन्! एष आगच्छामि।

प्रविश्य कात्यायनः—भगवन्! एष कात्यायनोऽहमभिवादये।

धौम्यः—स्वस्तिमान् भूयाः।

कात्यायनः—अनुगृहीतोऽस्मि। अथ किमाज्ञापयति भगवान्?

धौम्यः—वत्स! कात्यायन! प्रदोषे व्यतिक्रान्ते प्रत्यागतास्वपि सकलासु गोषु वत्समुपमन्युमनागतं वीक्ष्य दृढं पर्याकुला वो माता अहञ्च।

(क्रमशः)

---

## वार्षिकोत्सवः

[ निबन्धकः—श्रीरामधनशास्त्री ]

व्यतीतसौरमाघस्य षष्ठदिवसे रविवासरे सायं सार्धपञ्चमहोरायां कलिकाता 'युनिभार्सिटि इन्ष्टिटिउट्' इत्याख्यभवने साड़म्बरमजनिष्ट संस्कृतसाहित्यपरिषदश्चत्वारिंशवार्षिकमहोत्सवः।

तत्र हि नानादिग्दिगन्तागतेषु सामाजिकेषु अध्यापकप्रवराणां श्रीयुक्त उपेन्द्रनाथ घोषाल एम. ए. पि. एइच्. डि. महाशयानां प्रस्तावेन प्रख्यातयशसामध्यापनैकव्रतानां श्रीयुक्तचिन्ताहरणचक्रवर्त्ति एम ए काव्यतीर्थ-

महाभागानां समर्थनेन च नैयायिकधुरन्धरा विपश्चिद्वर्य्याः श्रीयुक्त-हेरम्ब-नाथतर्कतीर्थपादाः सभापतिपदमलमकुर्वन् सहैव सभास्ताराणामैकमत्य-संसूचककरतालप्रदानध्वनिनान्यतमसम्पादकश्रीयुक्तविष्णुपदभट्टाचार्य्य एम ए काव्यतीर्थमहोदयसमर्पितेन च वरणमाल्येन ।

अथैवमवसिते सभापतिवरणव्यापारे श्रीयुक्तविष्णुपदभट्टाचार्य्य-महोदयैर्वाचितं संस्कृतसाहित्यपरिषदुद्देश्यसंवलितमतीतवर्षीयकार्य्याणां विवरणमेकं गीर्वाणवाणीमयं सुललितं कीर्तितानि च संस्कृतसाहित्य-परिषद आगामिवर्षीयकार्य्यपरिचालकानां भाविनां विभागीयकर्मकर्त्तॄणां च नामानि । अतःपरं परिषदन्यतमप्रतिष्ठापकानामशेषशास्त्रालोचन-चतुराणामामरणमध्यापननिरतानां विद्वद्वरिष्ठानां धर्मनिष्ठानां स्वर्गतानां द्वारिकानाथन्यायशास्त्रिमहाभागानां चित्रस्योन्मोचनव्यापारे चित्रपरिचय-प्रदानापेक्षया सभापतिमहाभागैः कृतानुरोधाभ्यां श्रीमदुपेन्द्रनाथ घोषाल-श्रीयुक्तचिन्ताहरणचक्रवर्त्तिमहोदयाभ्यां शास्त्रिपादानां गुणावलीः परिषदः कृते तेषामतिमहद्दानञ्चाधिकृत्य दीर्घकालमालोचितम् प्रसङ्गतश्च विवृता सामाजिकेषु भारतवर्षीयशासकगोष्ठीनियुक्त'संस्कृत कमिशन्' इत्याख्यसमितेः सदस्याः वर्षेऽस्मिन परिषदि समागत्य परिषत्कार्य्यावली रालोक्य च यादृशीमात्मतुष्टिं मुक्तकण्ठमुद्घोषितवन्तः तत्कथा परिषत्कर्मपद्धतेः कथापि च सम्यगेव ।

एवमवसिते चित्रपरिचयादिव्यापारे सभापतिमहाभागैः सामाजिकानां समक्षमुन्मोच्य न्यायशास्त्रिपादानां चित्रमतिमनोरमं तदीयवंशकरीरैः सहृदयैः परिषदे प्रदत्तं चित्रस्थमहापुरुषमिममुद्दिश्य निवेदितः स्वकीयः श्रद्धातिरेकः सामाजिकमनोऽनुगतः ।

अतःपरं पण्डितप्रकाण्डैः श्रीयुक्तमोहिनीमोहनशास्त्रिभिः श्रीयुक्त-निरञ्जनस्वरूपब्रह्मचारिनवतीर्थैः श्रीमन्नारायणचन्द्रगोस्वामिवेदान्ततीर्थ-महाशयैश्च संस्कृतसाहित्यं संस्कृतसाहित्यपरिषदं प्रति च तेषां स्वस्वकीयामतिमहतीं श्रद्धां वेदयद्भिः सुदीर्घमालोचितं सललितया

भारत्या, आवेदितश्च जनसाधारणानां समीपे संस्कृतशिक्षायाः संस्कृत-भाषायास्तथा संस्कृतसाहित्यपरिषदः समुन्नतये।

अथ सभापतिमहाभागास्तेषां संस्कृतभाषामयेन प्राणस्पर्शिनाभि-भाषणप्रदानेन सामाजिकमनांसि रमयन्तः संस्कृतभाषां विशेषतः संस्कृत-साहित्यपरिषदं प्रति निजामतिगभीरामान्तरिकीं श्रद्धां प्रकटितवन्तः।

सभापतिमहोदयानामभिभाषणादनन्तरं परिषदध्यापक-श्रीयुक्तरामधन-शास्त्रिणा सभायाश्चिराचरितां रीतिमनुकुर्वता प्रदत्ता भूयांसः साधुवादाः सभाकार्य्यपरिचालनक्लेशमक्लेशं स्वीकुर्वाणेभ्यः सभापतिमहोदयेभ्यः।

ततश्चैवं समाप्तिमाप्ते सभानुष्ठाने नाट्यदक्षैः परिषत्सदस्यैरभिनीतं महाकविभासविरचितं प्रतिमानाटकम्। अभिनयोऽसौ सर्वाङ्गसुन्दर एवाजनि विभिन्नभूमिकारूढ़ानां अभिनेतॄणामभिनयनैपुण्येन। सर्व एव सभास्तारा एकवाक्येन यद्यपि अभिनयस्यास्य भूयसीं प्रशंसां कृतवन्त-स्तथापि परिषत्पक्षतः 'स्नेहः पापमाशङ्कत' इति बुद्ध्या किञ्चिदुपदिशामः प्रियतमान् नो भाविपरिषदभिनयप्रबन्धकारिबन्धुप्रवरान्। परिषदोऽ-भिनेतारो भारतीयसंस्कृताभिनयव्यापारेषु शिरःस्थानमधिकुर्वत इति नाधिकोक्तिः। परं 'निर्वीरमुर्वीतलमि'ति मन्यमानास्ते शैथिल्येन अननु-शीलनेनाल्पानुशीलनेन वाभिनयकार्य्येऽवतीर्णाः कदाचिदयशोभाजनं मा भूवन् इत्यत्रावहिताः स्युरित्याशास्महे।

---

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4. for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for member-

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramas nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt, Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhâttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti. M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs, 5; Rs, 4-8 (for members),

Reg. No. C 1073

Vol. XXXIX. No. 11 ३९श-वर्षस्य ११श-संख्या

March 1957 १८७८शकोये फाल्गुने मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4 d

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो विषष्ट्यधिकत्रयोदशशततम ( १३६३ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वेयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्‌भवनम्, कलिकाता—४

---

## Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha, at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta,

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 11 } १८७८-शकीये फाल्गुने ३९श-वर्षस्य ११श-संख्या { March 1957.

# मतिमञ्जरी

## श्रीश्रीगौरपूर्णिमा ।

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

सर्वसद्गुणपूर्णां तां वन्दे फाल्गुनपूर्णिमाम् ।
यस्यां श्रीकृष्णचैतन्योऽवतीर्णः कृष्णनामभिः ॥

प्रायः पञ्चशतसंवत्सरकालात् प्राक् प्राच्यभूमौ यदा वर्णाश्रमाचार-परायणा अपि केवलं वेदवादरताः श्रद्धाभक्तिविहीनाः शुष्कविचारचातुरी-प्रदर्शनप्रयासेन प्रतिपक्षपरिदलनमेव चतुर्वर्गसाधकं पाण्डित्यममन्यन्त वर्णवर्याः—यदा च जनकल्याणसाधनाय प्रणीतानि शास्त्राणि वर्णवर्ज्यानां कल्याणाय न व्यापारवन्ति—यदा च भक्तिहीनत्वाच्छुष्कप्रायाणि जन-मनांसि नालभन्त शान्तिं मनःप्रमोदिनीं तदैव प्रेमरसेन चित्तानि सरसानि विधाय प्रेम्णैव कया रीत्यातिदुर्वृत्तानामपि हृदयं जितं स्यादित्या-दीनि प्रदर्शयितुं युगधर्मपालको भगवान

"शकाब्दे रसशून्याब्धिचन्द्रमे तपसोऽन्तिमे ।
जगन्नाथस्य शच्याश्च तन्वोः कृष्णः प्रकाशितः ।
सायं फाल्गुनमासस्य पूर्णिमायां प्रभोर्जनिः ॥"

तदा—कलङ्करहिते गौरचन्द्रे दत्तविलोकने ।
सकलङ्केन चन्द्रेण जनानां किं प्रयोजनम् ॥
इति ज्ञात्वैव चन्द्रोऽसौ राहुणा जगृहे तदा ।
कृष्णः कृष्णो हरिश्चेति नाम्ना घुष्टं जगत्त्रयम् ॥
यदा हरिहरिध्वानैर्जनानां पूरितं जगत् ।
तदा पुण्यक्षणे गौरकृष्णो भूमाववातरत् ॥

( श्रीमत्स्वामिभास्करानन्दसरस्वतीप्रणीतश्रीचैतन्यचरितामृत-संस्कृतानुवादे आदिलीलायां त्रयोदशपरिच्छेदः १३९पृः ; १४५पृः)

सोऽयं सुदिवसः फाल्गुनपूर्णिमा नाम। अस्यां पौर्णमास्यां कुत्रचिद् वसन्तोत्सवः कुत्रचिद्धोलिकोत्सव इत्यादिना विविधेन नाम्नानुष्ठीयते उत्सवविशेषः प्रायो भारतवर्षस्य सर्वत्र। कलिपावनावतारस्य श्रीकृष्ण-चैतन्यस्य महिमानं यद्यपि केचन कण्ठतो न स्वीकुर्वन्ति तथापि तदाविर्भावेन जगतो यद् महोपकृतिः साधिता तद् मनसैवानुभवन्ति। भगवतस्तस्य महाभागवतस्य श्वपचादिनिर्विशेषं नामप्रचारेण प्रायो वर्णाश्रमिणस्तदानीं प्रतिकूलमतय आसन। समायातोऽद्य तस्य विचारकालः। वर्णाश्रमधर्मं सर्वथा क्षुण्णमभिपालयन्तो ये महाप्रभावशालिनः श्रीकृष्ण-चैत्तन्यमहोदयास्तथा तथा ध्वस्तप्रायान वहिर्विलसितान् वर्णाश्रमधर्मान् स्वे महिम्नि प्रतिष्ठितान् विदध्युस्तान प्रत्यधुनापि विद्वेषिणां यदाचरणं दृश्यते तदतीव दुःखप्रदम! यस्याविर्भावकारणमप्युक्तं स्पष्टं श्रीश्रीचैतन्यचरितामृते,—

अवतीर्य स्वयं कृष्णः स्वभक्तिं चेत प्रचारयेत् ।
तदैवेते हि निस्तारं लभेरन् मानवा इति ॥

विविच्यतां प्रेक्षावन्तः! यथाधुनास्माभिः कस्यापि पुरुषधुरन्धरस्या-

विर्भावः कारयते तथा तदानीमपि संसारशुभचिन्तकानां चित्तान्येवं-प्रायाणि समभवन्। अतएव तेषामाविर्भावो जगतकल्याणाय सम्पादितः।

ये खल्वद्यत्वेऽस्पृश्यतावर्जननीतिमनुवर्तन्ते तेऽपि कदाचिद् विद्वेष्टव्य इति द्वेषबुद्धया भगवन्तमवलोकयन्तीत्यहो महामोहमदान्धानां मनांसि। "काले कारुणिक! त्वयैव कृपया ते तारणीया नरा" इति महाजनोक्तभाषयैव संप्रार्थ्य तस्यावतरणस्य महान्ति कृत्यजातानि स्मरन्तोऽवलोकयन्तश्च वयं शान्तिं लभेमहि! तदाश्रयञ्च लब्धुं प्रार्थयामः—

अनर्पितचरीं चिरात् करुणयावतीर्णः कलौ
समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम्।
हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः
सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः॥

---

## आधुनिकसंस्कृतविलासे आक्षेपः

(निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः)

धन्या बङ्गवसुन्धरा विधिवशादादौ प्रतिष्ठापितं
विद्यासागरसूरिणा सुरगिरो विद्यामहामन्दिरम्।
धन्या संस्कृतसंस्कृतिर्जयति सा पाश्चात्यसम्मेलना-
दाश्चर्यं वहति प्रयागसदृशं तीर्थास्पदत्वं सताम्॥१॥
धन्या संस्कृतवागतुल्यविभवा यासीत् पुरा भारते
सेयं दीनतमा सुपुत्रनिवहैर्घृण्येव संलोक्यते।
ये ये ब्राह्मणपण्डिताः स्थितिमतां सम्मानसंरक्षकाः
पूज्यास्तेऽपि विरुद्धभावकलुषैर्निन्दास्पदं साम्प्रतम्॥२॥
या विद्या हितसाधिकापि जगतो नात्यादृता खेलति
पुत्राणामुटजे विषादसरसा कल्याणकृत्ये रता।

नास्ते यद्यपि जीविका तदपि ये रक्षन्ति तां सादरं
धन्यास्ते तनुजा युगोपकरणे शोच्यां दशां सङ्गताः ॥३॥
प्राच्यैः पश्चिमभावमेलनपरैर्यैर्यत्यते सस्पृहं
दृष्टीनां परिवर्तसाधनविधौ तेषां प्रचेष्टा वृथा ।
पाश्चात्यैर्यदि वर्जिता भरतभूश्चित्तं न रिक्तीकृतं
धन्या ये पितृपूर्वजान् विदधति प्रज्ञाविहीनान् पशून् ॥४॥
यस्मिन् भोः परिपाल्यते सुदिवसे काचित् प्रतिष्ठातिथि-
र्धन्या सा सुरभारती बहुमता सभ्यैश्च वावद्यते ।
राज्यप्राप्तिरभूद् रघूत्तमनिधेः भ्रातश्च पत्न्या समं
कष्टं काननवासवत् कृतिमतां दुःखातिरेको महान् ॥५॥
विद्या नो परिपूर्णतां गतवती टोलाख्यविद्यालये
ते जानन्ति न किञ्चन प्रतिपदं क्षीणाः समालोचने ।
आविर्भावदिनं कदा स्म भवति श्रीकालिदासस्य वा
तेन क्व प्रतिभाविलासहसितैः काव्यं पुनर्निर्मितम् ॥६॥
यद्रत्नं मलिनेऽपि जीर्णकुटिरे संरक्ष्यते कोविदैः
निन्द्यं तत् प्रतिपादयन् सदसि हे नव्य ! प्रयत्नादहो ।
तस्मादेव सुतथ्यजातद्युमणिं भाषान्तरे योजय-
न्नाश्चर्यं लभसे गवेषणफलं नव्यां कृतिं दर्शयन् ॥७॥
आस्तां तत् परिदेवनं करुणया वाणी दरीदृश्यतां
दूरे सा करुणस्वरैर्विलपितैः पुत्राननं प्रेक्षते ।
मानं मातरि संत्यजन् वरय तां श्रेयः समैर्लभ्यतां
माता रोषवशात् कदापि न भवेत् पुत्रे कृपावर्जिता ॥८॥

---

# ग्रन्थसमालोचना

समालोचकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

( समालोचनार्थमवश्यं ग्रन्थद्वयं प्रेषणीयम् )

**क्रियाविशेषणतत्त्वम् ।** कलिकातास्थश्रीविशुद्धानन्दसरस्वतीविद्यालयीयसंस्कृतविभागे प्रधानाध्यापकपदमधितिष्ठता श्रीसीतारामशास्त्रिव्याकरणन्यायवेदान्तसाहित्याचार्यष्टतीर्थेन विरचितम् । प्राप्तिस्थानम्:—श्रीविश्वनाथ-चट्टोपाध्यायः । ८, भूपेन्द्रवसु . आभेन्यु, कलिकाता-४ मूल्यमाणकाष्टकम् । पञ्चदशपृष्ठात्मिका पुस्तिका ।

स्वनामप्रसिद्धेन विद्वद्वरेण शास्त्रिमहाभागेन क्रियाविशेषणतत्त्वं निपुणं विचारितम् । तत्र कर्मणि द्वितीया (२।३।२) इति सूत्रेण द्वितीयाप्रतिपित्सूनां नव्यनैयायिकमूर्धन्यानां व्युत्पत्तिवादप्रणेतॄणां श्रीमद्गदाधरभट्टाचार्याणां तदनुयायिनाञ्च तथातिदेशिककर्मत्वस्य स्वीकारापेक्षयाऽऽतिदेशिक्या द्वितीयाया एव स्वीकारे लाघववादिनां शब्दशक्तिप्रकाशिकाकृतां श्रीमज्जगदीशतर्कालङ्काराणां आख्यातरहस्यादिप्रणेतॄणाञ्च मतं सुष्ठुतया विचार्य तन्निराकृत्य तथा निराकृत्य च द्वितीयानङ्गीकर्तुः किन्तु "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति ( २।३।४६ ) प्रथमान्ततां प्रतिपत्तुर्नवीनशाब्दिकचक्रचूडामणेः श्रीमन्नागेशभट्टस्य सिद्धान्ते क्रियाविशेषणानां मुख्यमेव कर्मत्वं ; न त्वातिदेशिकं—ततश्च मुख्य एव कर्मणि तत्र तण्डुलं पचतीतिवत् "कर्मणि द्वितीयेति" (२।३।२), महाभाष्यकारादीनां सर्वेषां वैयाकरणतल्लजानां मतं समर्थितम् । शास्त्रिमहोदयानां विचारचातुरी रमणीया,—भाषाविन्यासपद्धतिरभिनवा, सुखबोध्या च भाषा न केवलं विदुषामपि तु विद्यार्थिनामपि प्रीतिं जनयिष्यतीति निर्विवादम् । प्रसङ्गतः

क्रियाविशेषणानां नपुंसकत्वमनियतलिङ्गस्थल एव, नित्यलिङ्गतास्थले तत्तल्लिङ्गतैवेति भाट्टरहस्यादिमतमप्युट्टङ्कितम्। नव्यनैयायिकैस्तु "क्रियाविशेषणे तृतीयापी"त्यनुशासनात् तृतीया। क्रियाविशेषणस्य द्वितीयान्तस्य तृतीयान्तस्य वा सर्वत्रैवाभेदो विभक्तेरर्थः। द्वितीयार्थाभेदस्य सम्बन्धविधया तृतीयार्थस्य च प्रकारविधया भानमात्रं विशेषः" इति यत् "एतावता प्रबन्धेनेति शिरोमणिग्रन्थव्याख्यानावसरे गदाधरसामान्यनिरुक्तिक्रोड़पत्रे विवेचितं तन्मतं समीचीनं न वेति विचारणीयम्। एतन्मतावलम्बिभिः "संसारसागरं घोरं तर्त्तुमिच्छति यो नरः। गीतानावं समासाद्य पारं याति सुखेन सः॥" इत्यत्र सुखेनेति न प्रकृत्यादिभ्यस्तृतीया किन्तु सुखं स्वपिति, सुखं यातीतिवत् क्रियाविशेषणे तृतीयैवेति प्रतिपाद्यते। परिगृह्यते च शिष्टैस्तन्मतं,—नोपेक्षणीयं प्रसङ्गत स्तन्निराकरणे ग्रहणे वा विचार आवश्यक एवासीत्।

रमणीयस्यास्य ग्रन्थरत्नस्य सुबहुलः प्रचारः काम्यते—काम्यते च ग्रन्थप्रणेतुर्निरामयं सुदीर्घजीवनम्। येनैवं क्रमेण सूक्ष्मविचारचातुरीप्रदर्शनेन संस्कृतसाहित्यस्य परिपुष्टिः सम्पाद्यतेतरामिति शम्।

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## सप्तमाङ्कः

### प्रथमदृश्यपटः

कात्यायनः—उपमन्युरद्यापि नागतः ?

धौम्यः—अथकिम्।

कात्यायनः—यद्येवमिदानीमहमपि दृढं चिन्तितोऽस्मि ।

धौम्यः—कथं नाम ?

कात्यायनः—भगवन् ! अद्य पञ्चमो दिवसस्तस्य भगवदाज्ञया शीर्णपत्रैरेव स्वां वृत्तिं कल्पयतः। संवादतश्चास्य समुपलब्धस्तृतीय एव दिवसे तदीयदृष्टिशक्तिह्राससमारम्भः। तत् किमेष तस्यैवाकुशलः परिणामः ? अथवा शान्तं पापं ! प्रतिहतममङ्गलमस्तु भगवदाशिषा मे वयस्यस्य ।

धौम्यपत्नी—वत्स ! कात्यायन ! वृत्तेनानेन प्रकाशितेन चिन्तां बर्द्धयसि । तदलमल्पेनापि विलम्बेन। त्वरितमन्विष्यतामायुष्मानुपमन्युः। तमधिकृत्य नितरां पापमाशङ्कते मे हृदयम् ।

धौम्यः—वत्स ! कात्यायन ! एवं क्रियताम् । अथवा एहि, यावदहमपि सत्वरं चिन्ताप्रतीकाराय वत्समुपमन्युमवलोकयामि ।

कात्यायनः—यथाज्ञापयति भगवान् ।

धौम्यः—प्रिये ! गच्छ त्वं शेषभूतानि निशामुखकृत्यानि निःशङ्कं सुसम्पादयितुम् । आवामचिरेणैव कालेन,—

उपमन्युमुपादाय क्षेमवन्तं गुरुप्रियम् ।
प्रत्यावर्त्तावहे चिन्तां तव नाशयितुं लघु ॥

पत्नी—एवमस्तु देवताप्रसादेन ।

धौम्यः—एहि वत्स ! कात्यायन ! ( निष्क्रान्तौ )

पत्नी—तदिदानीमहमपि शेषभूतानि निशामुखकृत्यानि सम्पादयितुमाश्रमाभ्यन्तरं एव प्रविशामि । भगवत्यो देवताः ! प्रसीदत, न चिरादेव प्रत्यावर्त्तयत मे कुशलिनं वत्समुपमन्युम् । (निष्क्रान्ता)

---

द्वितीयदृश्यपटः

( ततः प्रविशति गायन् कूपे पतितः अन्ध उपमन्युः )

( गीतम् )

को मम सम्प्रति शरणम् ?
हा हा दैवादन्धतया मे भविता नूनं मरणम् ।
वेत्ति न भगवान् मामकवृत्तं,
कस्य भवेन्मयि सदयं चित्तम्,
पातकमिह मम किं वा वृत्तं,
यस्मादापदि पतनम् ॥
एहि गुरो ! मां पश्य विपन्नं,
विपदि न वीक्षे संश्रयमन्यम्,
को मम द्रवयतु दुस्तरदैन्यं,
परितो दुर्गमगहनम् ॥
दुर्बलमङ्गं विषमक्षुधया,
न सरति वाणी दुःसहतृषया,
मातः ! क्वासि विलोकय कृपया,
नाशय दुर्गतिदहनम् ॥
विहरसि वायो ! निखिले भुवने,
ज्ञापय गुरुमिदमाश्रमभवने,
करुणा तव यदि नान्तःकरणे,
नियतं यमपुरगमनम् ॥

( स्वगतम् ) अहह ! अन्धः संवृत्तोऽस्मि । पन्थानमपश्यन्नेव पादस्पर्शमात्रेण पन्थानमनुभूय तत्र शनैः पर्यटन्नपि दैवादन्धकूपे पतितोऽस्मि । हा हा नावधारयितुमर्हामि कथमेवमान्ध्यं समजनीति । अपि नाम तत्तदुपायपर्यायेण वृत्तिपरिकल्पने

भगवता गुरुणा प्रतिषिद्धः पत्रमात्रेण वृत्तिं कल्पयन्नेवमन्धीभूतोऽस्मि ? यद्येवं, किमिति गवादीनां पत्रेण वृत्तिं कल्पयतामपि नोपहन्यते दृशोः शक्तिः ? अथवा गुर्वनुमतं सर्वमेव क्षेमं शिष्याणामिति गुर्वनुमतेन वस्तुना कथमेवं सम्भवति ? भवतु, कृतमिदानीमात्मनो भावनया, सम्प्रति क नु प्रस्थिता गुरोर्गावः, यासां सञ्चारणाय रक्षणाय च तत्रभवता नियुक्तोऽस्मि। नूनमिदानीमुपस्थिता रजनी, यतः प्रदोषतिमिरसङ्घातेन न स्वल्पोऽपि मे नेत्रयोः प्रतिपद्यते प्रकाशः। तदस्यां रजन्यां यदि गुरोर्गावः काननान्तरं प्रविष्टा भवेयुस्तदा कुतस्तासां स्वल्पापि परित्राणसम्भावना दुरन्तश्वापदकुलात ? अथवा शान्तं पापम्, प्रतिहतममङ्गलं तासाम्। नूनमेताभ्यो देवताः स्वस्ति विधास्यन्ति। अपि नाम प्रत्यहमाश्रमपथेन गमनाभ्यासात् पथः परिचयेन सायमिमाः कुशलेनाश्रममेव प्राप्ताः ? भगवत्यो वनदेवताः ! कृपया यूयं तथैव कुरुत। अन्यथा गुरुकोपदग्धस्य मे नरकपातात कस्तावदन्यो भविता परित्राता ? अहह ! सुगभीरे कूपे निपतितोऽस्मि। लुप्ता च निःशेषमेव मे दृशोः शक्तिः। तदशक्यः स्वेन विचेतुं परित्राणोपायः। निर्जने गहने को वास्तां शरणं मे मन्दभाग्यस्य ? भगवन् ! क्वासि ? एष निराश्रयस्त्वां कातरः समामन्त्रयामि। हा मातः ! क्वासि ? पश्य मामवशं दैवादन्धकूपे निपतितं मृत्युमुखे प्रविशन्तम्। हा गुरो ! मा नाम ममैव दुर्भाग्यतः स्वकृत्यनिरपेक्षं मां मंस्थाः। किं कुर्य्याम् ? दैवादल्पमात्रेणैव कालेन सुतरामन्धीकृतोऽस्मि। अहह ! सुचिरादनशनादिपरिक्लेशेन विकलस्य मे घूर्णते शिरः। न प्रसरन्ति वाचः। हा गुरो ! क्वासि ? एषोऽहं म्रिये। देहि चरमे काले सन्दर्शनं मे मन्दभाग्यस्य। हा गुरो ! हा मातः ! ( मूर्च्छति )

२

( ततः प्रविशति उपमन्युं विचिन्वन् धौम्यः )।

धौम्यः—अहो! प्रदोषादारभ्य समन्ततो वत्समुपमन्युं विचिन्वन् अद्यापि तद्वार्त्तां नाधिगच्छामि। कात्यायनोऽपि तदानीमेव तदन्वेषणाय दिगन्तरे प्रेषितः, सोऽपि वत्सस्य वार्त्तामादाय नोपगच्छति। तदेतेन नितरां पर्याकुलं मे हृदयम्। गृहिणी च सुतरामुपमन्युस्नेहात् समुत्कण्ठिता दुःखं कालमतिवाहयति। तत् किमिदानीं करिष्ये? यदि वत्सस्य वार्त्तामनादायैवाश्रमे प्रतिनिवृत्तः स्याम्, दुःशकं जीवनप्रतिपालनमेव गृहिण्याः। तत् क्व नु वत्समुपमन्युमतःपरं लभेय? अपि नाम वत्सो मे मर्मवात्यूर्जितेन नैष्ठुर्येण समुद्वेजितः क्वापि अपुनरावृत्तये प्रस्थितः स्यात? अथवा नेदम् उपमन्यौ सम्भावयितुमर्हामि। भवतु, पुनरुच्चैराकारयामि। (प्रकाशम्) वत्स! उपमन्यो! क्वासि? एषोऽहं धौम्यस्त्वामामन्त्रयामि। देहि मे प्रतिवचनम्।

उपमन्युः—(संज्ञां लब्ध्वा श्रुतिमभिनीय स्वगतम्) अये! एष भगवान्? आः समुज्जीवितोऽस्मि।

धौम्यः—वत्स! उपमन्यो! उपमन्यो!

उपमन्युः—हा कष्टम्! दौर्बल्यातिशयेन न शक्नोम्युच्चैः प्रतिवचनमपि प्रयोक्तुम्। तत् किं नु खलु करिष्ये? भवतु, यावच्छक्ति प्रयत्नं करोमि।

धौम्यः—वत्स! उपमन्यो! उपमन्यो! कथय क्वासि?

उपमन्युः—भगवन्! एषोऽहमन्धीभूतः कूपे पतितोऽस्मि।

धौम्यः—अये! उपमन्योरिवायं स्वरः! तत् किमत्रैवानुगृहीतोऽस्मि दैवेन? भवतु, पुनरप्याहूय विशेषमवधारयामि। (प्रकाशम्) वत्स! उपमन्यो! देहि मे पुनः प्रतिवचनम्! येन स्थितिपदन्ते विशेषतो निश्चिनोमि।

उपमन्युः—एष भगवन् ! आन्ध्यदोषादन्धकूपे पतितोऽस्मि।

धौम्यः—(स्वगतम्) अये ! एष दक्षिणस्यां दिशि स्वरः श्रूयते। (प्रकाशम्) वत्स ! मा भैषीः। एष निर्णयं गतोऽस्मि। एषोऽहमागच्छामि। (द्रुतमुपसृत्य) अहो ! सुगभीरे कूपे पतितो मे आयुष्मान। तत कथमुद्धरामि ? आं दृष्टम्। अनेन उत्तरीय-वसनेनावलम्बनेन समुद्धरामि। अथवा सुगभीरे कूपे पतितस्य वत्सस्य न पर्याप्तमनतिप्रमाणमुत्तरीयमुद्धारसाधनाय, दुःशकञ्च समुद्धरणमस्य मया निःसहायेन। तत किन्नु खलु करिष्ये ? (विचिन्त्य) भवतु, दृष्टम् ! कात्यायनमाहूय तेन सहायभूतेन समुद्धरामि। दृश्यते चैषा समीप एव दृढ़संस्थाना सुदीर्घा लता, तदेतयैव कूपे लम्बितया वत्समुपमन्युमुद्धरेयम्। भवतु, इदानीं कात्यायनमामन्त्रयामि। (प्रकाशम्) कात्यायन ! कात्यायन ! (स्वगतम्) अपि नाम कात्यायनः सुदूरं गतः ? भवतु, किञ्चिद् दूरं गत्वा समुच्चैराह्वयामि। (प्रकाशम्) (किञ्चित परिक्रम्य) कात्यायन ! कात्यायन ! क्वासि वत्स ! शीघ्र-मागच्छ।

नेपथ्ये कात्यायनः—अये ! एष भगवान ससम्भ्रमं मामाह्वयति। (प्रकाशम) भगवन ! एषोऽस्मि, एष आगच्छामि।

धौम्यः—शीघ्रमेहि वत्स !

कात्यायनः—(उपसृत्य) भगवन ! एष कात्यायनोऽहमभिवादये। अपि समासादित उपमन्युः ?

धौम्यः—अथ किम्।

कात्यायनः—क्वनु खलु मे वयस्यस्तिष्ठति ?

धौम्यः—एष वत्सो मे समीपवर्त्तिनि कूपे पतितस्तिष्ठति।

कात्यायनः—अहो अत्याहितम् ! कथं नु खलु कूपे पतितः ?

धौम्यः—वत्स ! दैवादुपनतेनान्ध्यदोषेण।

कात्यायनः—हा हा ! कथमान्ध्यं समुपनतं मे वयस्यस्य ? भगवन् ! प्रसीद, प्रत्यावर्त्तय मे वयस्यस्य दृशोः शक्तिम्,

धौम्यः—वत्स ! कात्यायन ! अलमत्याकुलतया । क्रियतामिदानीं यदह-मुपदिशामि ।

कात्यायनः—आदिशतु भगवान् ।

धौम्यः—वत्स ! एतां पादपलम्बितां सुदृढ़ां लतां पश्यसि ?

कात्यायनः—पश्यामि भगवन् !

धौम्यः—निःशेषामेनामाहर ।

कात्यायनः—यथाज्ञापयति भगवान् । (तथाकृत्वा) भगवन् ! एषा आहृता ।

धौम्यः—एहि वत्स ! सम्प्रति कूपसमीपम् । ( परिक्रम्य ) अथेदानी-मस्या लतायाः सुदृढ़मवलम्ब्यतामेकांशः । यावदहमपि अपर-मंशमस्याः कूपाभ्यन्तरे वत्सस्योपमन्योरवलम्बनाय निक्षिपामि ।

कात्यायनः—भगवन् ! एष दृढं गृहीतो लताया एकांशः । ( तथा करोति )

धौम्यः—एष क्षिप्यते मया कूपाभ्यन्तरे परांशः । ( तथा कृत्वा ) वत्स ! उपमन्यो !

उपमन्युः—आज्ञापयतु भगवान् ।

धौम्यः—वत्स ! य एष लतांशः कूपाभ्यन्तरे प्रेष्यते, स एष त्वया करद्वयेन सुदृढ़मवलम्बनीयः ।

उपमन्युः—(लतांशमासाद्य) भगवन् ! एष सुदृढ़ं गृहीतः करद्वयेन ।

धौम्यः—वत्स ! अथेदानीमवहितो भव । यावदेतावावां लतामिमा-मूर्द्ध्वमाकर्षावः ।

उपमन्यु—अवहितोऽस्मि भगवन् !

धौम्यः—कात्यायन ! त्वमपि अवहितो भव ।

कात्यायनः—भगवन् ! अवहितोऽस्मि ।

धौम्यः—आकृष्यतामिदानीमूर्द्ध्वं लतांशः ।

कात्यायनः—एवं क्रियते । ( लतांशमूर्द्ध्वमाकर्षतः )

कात्यायनः—(दृष्ट्वा) अये ! एष वयस्य उपमन्युः करद्वयेन गृहीतलतांशः आवाभ्यामाकृष्यमाण ऊर्द्ध्वमुत्तिष्ठति। एष उत्तिष्ठति, एष उत्तिष्ठति ! अहो ! प्रसादः ! एष प्रायेण कूपमुखं प्राप्तः।

धौम्यः—वत्स ! कात्यायन ! सम्प्रति करे गृहीत्वा समुद्ध्रियतामुपमन्युः।

कात्यायनः—एवं क्रियते। (तथा करोति) (उपमन्युः कूपाद् भूमिं गतः)

उपमन्युः—भगवन् ! एष भगवत्प्रसादादेव जीवनसंशयान्मुक्त उपमन्युः साष्टाङ्गं प्रणमति।

धौम्यः—वत्स ! भाग्येन काले दृष्टः सुचिरं जीव। वत्स ! त्वया महत्या गुरुभक्त्यैव रक्षितोऽसि।

उपमन्युः—आर्य्य कात्यायन ! एष उपमन्युः प्रणमति। दिष्ट्या पुनरपि भवद्भिः सङ्गतोऽस्मि।

कात्यायनः—एहि वयस्य ! दृढं परिष्वजस्व माम्। (उभौ परिष्वजेते) वयस्य ! न किञ्चिद् दुर्लभं गुरुषु प्रसन्नेषु।

उपमन्युः—आर्य्य कात्यायन ! अयोग्यः किलायं मन्दभाग्यस्तादृशस्य महतो गुरुप्रसादस्य। कथमन्यथा दुरन्तेन दैवहतकेन निर्वर्त्तितं मे चिरायान्ध्यम्। हा हा ! नातः परं पुरेव भवतो द्रक्ष्यामि, भगवतो भगवत्या मातुश्च पादौ परिलोकयिष्यामि ! हा हा ! हतोऽस्मि मन्दभाग्यः ! (मूर्च्छति)

धौम्यः—वत्स ! उपमन्यो ! समाश्वसिहि समाश्वसिहि।

कात्यायनः—वयस्य ! उपमन्यो ! समाश्वसिहि समाश्वसिहि (अवलम्बते)

धौम्यः—वत्स ! कात्यायन ! अदूरे दृश्यते सरः, तस्मात् सत्वरं सलिलमाहर। अनशनेन तृष्णया च सुतरां परिक्लिष्टस्य वत्सस्य मे स्वल्पेनापि मानसवैक्लव्येन मूर्च्छा जाता, तत सत्वरं गच्छ।

कात्यायनः—यथाज्ञापयति भगवान्। (निष्क्रान्तः)

धौम्यः—अहो ! वत्सस्योपमन्योर्गुरुपरतन्त्रता निष्ठा च ! वत्स ! उपमन्यो ! कठोरां परीक्षामुत्तीर्य्य गौरवितोऽसि। नूनमेतेन

देवतास्ते स्वस्ति करिष्यन्ति। अहो! सुदुस्तरा खलु प्रवर्त्तिता-मया परीक्षा वत्सस्योपमन्योः प्रशस्तिपरिज्ञानाय, यतः प्राप्त-मनेन महादारुणमान्ध्यम्। तत् कथमिदानीमस्य प्रतीकारः? (क्षणं विचिन्त्य) आं दृष्टम्। वत्समुपमन्युं देवभिषजोरश्विनी-कुमारयोरुपासनां कारयामि, यया तावेतौ परितुष्टौ वत्सस्यो-पमन्योरान्ध्यप्रतीकारं करिष्यतः। अहो! यद्येवमपि वत्-सस्यान्ध्यं न निवर्त्तेत, तदा,—

नैष्ठुर्यजन्मापयशो मदीयं
चिराय लोके भविता निरूढम्।
विपत्तिवीजं गुरुपारतन्त्र्यं
निश्चित्य हास्यन्ति तदाप्तवोधाः॥

तदत्र का गतिः? हे भगवन्तौ अश्विनीकुमारौ! दयेतां दयेतां भवन्तौ, वत्सस्योपमन्योरुपासनया परितुष्टौ निवर्त्तयेतां तदीयमान्ध्यम्। अन्यथा—

जगतः स्थितिसाधन्यां गुरुभक्तौ चिरन्तनः।
कलङ्को भविता नूनं देवभक्तौ तथा भुवि॥

कात्यायनः—(ससम्भ्रमं प्रविश्य) भगवन्! इदं सलिलसिक्तमुत्तरीयं सलिलपूर्णं पत्रपुटकञ्च।

धौम्यः—उपनय। (गृहीत्वा नेत्रयोः सलिलं प्रक्षिप्य) वत्स! उपमन्यो! समाश्वसिहि समाश्वसिहि।

कात्यायनः—वयस्य! उपमन्यो! समाश्वसिहि।

उपमन्युः—(संज्ञां लब्ध्वा) आः! समुज्जीवितोऽस्मि।

धौम्यः—वत्स! उपमन्यो! पीयतामिदं पत्रपुटकगतं सलिलम्। येन तृषाजनितक्लमनिवर्त्तनेन कथञ्चित् स्वस्थो भवितासि।

उपमन्युः—यथादिशति भगवान्। (तथा कृत्वा) आः! भृशं समुज्जीवितो-ऽस्मि।

धौम्यः—वत्स ! उपमन्यो ! सम्प्रति किञ्चित् स्वास्थ्यमापन्नं त्वां पृच्छामि,—कथमकस्मादीदृशमान्ध्यं गतोऽसीति ।

उपमन्युः—भगवन् ! न जानामि ।

धौम्यः—वत्स ! कथय मया सर्वतः प्रतिषिद्धः केन स्वां वृत्तिं कल्पितवानसि ?

उपमन्युः—भगवन् ! गोसञ्चारणक्षेत्रसन्निहितायां भूमौ सुलभैरर्कपत्रैरेव ।

धौम्यः—आम् ! तत एव नूनमुत्पन्नमिदमान्ध्यम् । हा कष्टम् !

दुरन्तव्यवसायेन मया यत् समनुष्ठितम् ।
तस्यैव परिपाकोऽयमन्धभावो भयावहः ॥

अथवा विफलमतीतानुशोचनम् । सम्प्रति लसद्रूपायां विपत्तौ प्रतीकारसरणिरनुसरणीया । ( प्रकाशम् ) वत्स ! उपमन्यो ! मा तावद् वैक्लव्यं यासीः । अश्विनीकुमारमन्त्रं ते ददामि, यस्य पूतेन पुरश्चरणेन नचिरादेव चक्षुः प्राप्स्यसि ।

उपमन्युः—ददातु ददातु मे तं मन्त्रं भगवान् । येन त्वरया चक्षुर्लब्ध्वा भवत्पादपङ्कजसन्दर्शनेनात्मानं कृतकृत्यं कुर्याम् ।

धौम्यः—वत्स ! इदं सलिलं, अनेनोपस्पृश्य पूतः सन् मन्त्रं गृहाण ।

उपमन्युः—(सलिलं गृहीत्वा आचम्य) एष पूतोऽस्मि, अनुगृह्णातु मां भगवान् ।

धौम्यः—एहि वत्स ! ( कर्णे मन्त्रं ददाति )

उपमन्युः—अहो ! अनुगृहीतोऽस्मि भगवता प्रसन्नेन ।

धौम्यः—वत्स ! उपमन्यो ! वत्स ! कात्यायन ! मन्त्रपुरश्चरणाय पवित्रं पदमपेक्ष्यते । तदित आश्रमं गत्वा तत्रत्ये पञ्चवटीकुञ्जे पुरश्चरणमाचरणीयम् ।

उभौ—यथाज्ञापयति भगवान् ।

धौम्यः—वत्स ! कात्यायन ! नातिसन्निहितमाश्रमपदम्, अन्धश्चायमुपमन्युरनशनादिक्लेशैरतिपरिक्लिष्टः, तत नूनमशक्यमनेन चरण-

सञ्चारैराश्रमपदं सुखेन गन्तुम्, अतस्त्वमेव वत्समुपमन्युं स्कन्धेन वहन्नाश्रमं प्रापय ।

कात्यायनः—अहो ! ममैव हृदयगतं भगवानादिशति । (प्रकाशम्) भगवन् ! मयाप्येवमेव चिन्तितम् । तदेषोऽहं वयस्यं वहामि । वयस्य ! उपमन्यो ! अवहितो भव, एष त्वामहं स्कन्धमारोपयामि ।

उपमन्युः—आर्य्य ! आदौ दीयतां मे त्वदीयचरणरजः, येनाहं किल्विषी न स्याम् । ( कात्यायनस्य पादरजो गृह्णाति )

धौम्यः—वत्स ! उपमन्यो ! विपदि अलमात्मापराधशङ्कया विपदमिमामुत्तीर्य्य मर्य्यादां स्मरिष्यसि ।

उपमन्युः—यथादिशति भगवान् । का गतिः ?

कात्यायनः—एहि वत्स ! अलमतः परं विलम्बेन । ( उपमन्युं स्कन्धमारोप्य ) भगवन् ! एष स्कन्धेनोपमन्युर्गृहीतः ।

धौम्यः—तद् गच्छेदानीम् । (उभौ परिक्रामतः ) ।

अहो ! सुतरां प्रवृद्धा रजनी,—तथाहि,

शान्तस्वना नीड़गता विहङ्गा घोरः स्वरः क्वापि च कौशिकानाम् ।
आन्ध्यादिवैषा तमसोपमन्योः समावृता किं मलिनीबभूव ॥

भवतु गच्छामि ।

(निष्क्रान्ताः सर्वे ) ।

( क्रमशः )

---

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for member-

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramas nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkaharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs, 5;Rs, 4-8 (for members).

Reg. No. C 1073

Vol. XXXIX.
No. 12
३९श-वर्षस्य
१२श-संख्या




April 1957
१८७८शकाब्दे
चैत्रे
मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4 d

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो त्रिषष्ट्यधिकत्रयोदशशततम ( १३६३ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 12 | १८७८-शकीये चैत्रे ३९श-वर्षस्य १२श-संख्या | April 1957.

## मतिमञ्जरी

### वर्षान्तविज्ञप्तिः

[ निबन्धकः—श्रीयादवेन्द्रनाथ-राय-न्यायतर्कतीर्थः ]

वर्षान्तः फाल्गुने वा चैत्रे वेति सन्देहः सम्पादितो भारतराष्ट्रस्य नवीनया पञ्जिकया। नवीना दृक्सिद्धगणना बहोः कालात् प्राक् प्रचलिता किन्तु तत्र वत्सरस्यारम्भे नवीनविधत्वं केनोपकरणेन सम्पादितं न तज्ज्ञायते। श्रूयतेऽग्रहायणे कदाचिद् वर्षारम्भ आसीत्। कालचक्रस्यावर्तनेन सर्वं सम्भवतीति सत्यं किन्तु सहसा तस्यापतनं चित्तं द्राक् कलुषयति। वर्षान्ते नवपञ्जीसमागमेन सार्द्धं नूतनदशमिकमुद्राया अप्याविर्भावो जातः। येनाधुना जनसमाजे विशृङ्खलाविशेषः समुत्पाद्यते परतश्च समुत्पादयिष्यते। नूतनं किञ्चित् कर्तव्यमिति बुद्ध्यैव सहसा नूतनकरणं न युक्तियुक्तम्। यद्यपि दशमिकमुद्रया सुविधाविशेषो राष्ट्रैः प्रेक्ष्यते तत्र विनिमयतारतम्यं कथं सम्पादितम्? राष्ट्रियैर्ग्रहणकाले सप्तदशमिकमुद्राभिराणकमेकमन्यैश्च षड्दशमिकमुद्राभिः। किमत्र बीजम्?

अपि नाम राष्ट्राधिकारे स्थितानां डाकपत्राणां मूल्यवृद्धिर्जाता ? आहोस्वित् प्राचीनमुद्रया मूल्यमानस्य न्यूनता विहिता ? एतयोरेकतरमपि न राष्ट्रियैरुद्घोषितम्। एतद्दृष्ट्या विश्वभारतीसंस्थायामपि त्रिंशद्दशमिक-मुद्राभिः चतुराणकमानं निर्द्दिष्टम्। सर्वथा स्वैराचारः प्रवर्तते किम् ? एवं क्रमेण यदि घृततण्डुलवस्त्रादिविक्रेतारः स्वस्वाभिलाषक्रमेण मुद्रामानं निर्द्दिशेयुस्तदा का गतिः सर्वथा निपीड़ितानां मध्यवित्तेतिविरुदविभूषिता-नाम् ? यानशुल्कमानमधुना विवेचनाधीनं वर्तते पश्चिमवङ्गेषु सर्वत्र विशृङ्खलादर्शनात्।

यथा तथा वा भवतु सुस्थं जनचित्तं गणतन्त्रीयै राष्ट्राधिकारैरनु-वर्तनीयमिति तावद्वस्तुस्थितिः। अन्यथा अन्यथाभावो भवितेत्यत्र कः सन्देहः। नास्माभिर्बहु समालोच्यते। निपुणैः प्रेक्षकैरतीतं निर्वाचनं पर्य्यालोच्यतामुदासीनया दृष्ट्या। तत्रैव सर्वं प्रतिविम्बितं "करतला-मलकवत्" प्रतिभास्यति।

अन्यच्च पत्रिकामिमां संस्कृतभाषामयीमधिकृत्य किञ्चिद् वक्तव्यमस्ति। प्रायः पाठकैर्वयं भूयो भूयो यथाकालं पत्रिकायाः प्रकाशनाय विज्ञापिताः। तदत्र बहुषु कारणेषु सत्स्वपि वित्ताभाव एव मूलकारणतया परिगृह्यतां सहृदयैर्ग्राहकमहोदयैः। विगतेऽब्दे राष्ट्राधिकारात् पत्रिकाप्रकाशनार्थं सहस्रं मुद्रा लब्धा अतश्च नोपलभ्यते किञ्चित्। दारिद्र्यात् प्रायः समधिका एव ग्राहकाः स्वल्पमेव मूल्यं प्रयच्छन्ति। तथापि नोदासीनैरस्माभिः स्थीयते। यथाकालं प्रकाशार्थं यथा यत्यते तथा पत्रिकायाः कलेवरवृद्ध्यर्थ-मपि यत्यते। यदि राष्ट्राधिकाराद् वित्तं लब्धं भवेत् तदास्माभिः सर्वमेतत् सुखं साधयितुं शक्यते। तदर्थं पुनः पुनः राष्ट्राधिकारं प्रार्थयामहे। भगवन्तं च प्रार्थयामहे यत् सोऽयं भगवान् राष्ट्राधिकारस्य शुभां बुद्धिं यच्छतु येनास्माकं देवभाषा रक्षिता सती जगतः कल्याणं विदध्यादिति।

---

# श्रीरामलीलामृत-स्तोत्रम्

निबन्धकः—अध्यापक-श्रीदुर्गादासगोस्वामी, एम. ए. साहित्यशास्त्री

लीलामानुषविग्रहं श्रितमहो भूभारहारेच्छया
दूर्वाश्यामरुचिं सुरासुरनरत्रैलोक्यसम्पूजितम् ।
सीताजानिमचिन्त्यकार्यविभवं चिन्तामणिं योगिनां
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१

पुत्रेष्टिं कृतवत्यथो दशरथे भक्त्या समावर्जितं
कौशल्याजठरे गृहीतजनुषं यज्ञेश्वरं तत्त्वतः ।
कौमारेऽधिगतास्त्रशास्त्रमुपलोद्धारादहल्यास्तुतं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥२

विश्वामित्रनिदेशतः क्रतुभयस्थानं सदा ताड़कां
हन्तारं तदनु क्षणात स्मररिपोः श्रीमद्धनुर्भञ्जकम् ।
सानन्दञ्च सविस्मयञ्च जनकादीनां पुरः पश्यतां
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥३

उद्वोढ़ारमयोनिजां त्रिभुवनक्षेमाय तां जानकीं
कारुण्यात स्वयमिन्दिरां भुवमितामानन्दनिस्यन्दिनीम् ।
सद्वन्द्यां शरदिन्दुसुन्दरमुखीं रामैकचिन्तामयीं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥४

उद्वाहात परमभ्ययोध्यमखिलैर्गुर्वादिभिः स्वैर्जनै-
र्यातारं पथि भार्गवस्य मिलतो गर्वान्धबुद्धेर्मुहुः ।
वाग्वज्रैः क्षुभितं झटित्यथ तदत्युग्रावलेपान्तकं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥५

प्राप्तां हन्त ! कुलक्रमात पितृवचः सत्यार्थमल्पीकृतां
राज्यर्द्धिं तदनुज्ञया विजहतं भार्यानुजाभ्यां ततः ।

गन्तारञ्च महावने नववयस्यादाय कृच्छ्रव्रतं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥६
प्रत्यानेतुमुपागतस्य भरतस्योद्वीक्ष्य वैक्लव्यज-
प्रेमाश्रुस्नपितं सुदीनवदनं संक्षोभितस्वान्तरम् ।
पश्चादर्पितवन्तमस्य करयोः स्वे पादुके दुर्लभे
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥७
श्रुत्वा जीवगतिं पितुः पृथुशुचं प्रत्यक्षमासेदुषः
सावेगं स्वकरं प्रसार्य सिकतापिण्डान् स्वयं याचतः ।
शास्त्रप्रत्ययतः कुशेषु ददतं विश्वैकशिक्षागुरुं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥८
विभ्रद्धेमकुरङ्गकूटवपुषं मारीचमग्रे स्थितं
याचन्त्यां प्रणयान्मुहुर्मखभुवि प्रत्यस्तधैर्यं शनैः ।
हन्त ! प्राकृतवत् प्रलोभनवशाद् व्यामोहमासादितं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥९
शून्यात् पञ्चवटीकुटीरकुहरात् सन्न्यासिवेषच्छलं
विभ्राणेन दशाननेन सुकृतद्वेषाद्धृतां प्रेयसीम् ।
अन्विष्यन्तमरण्यसागरसरिच्छैलेषु साम्रं मुहुः
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१०
सुग्रीवप्रमुखैश्चिराय समयान्मित्रत्वमापादितं
वालिच्छद्मवधाद् दृढीकृतमथ ग्रावणां शतैर्योजितम् ।
विस्तीर्णं प्लवमानमब्धिसलिले सेतुं स्वया लीलया
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥११
अग्रे प्रेरितमारुतिं खररणात् प्राक् स्वर्णलङ्कापुरे
साभिज्ञानमुदन्तवेदनतया दौत्येन सीतान्तिके ।
पश्चात्तीर्णमहोदधिं सहचरैः शाखामृगर्क्षादिभिः
श्रीरामं नयाभिराममखिलानन्दालयं संश्रये ॥१२

संग्रामे किल कुम्भकर्णतरणीसेनेन्द्रजितसङ्कुले
नानावीरवति क्षुधार्दितशिवागृध्रादिभिर्भीषणे ।
स्वभ्रात्रा हनुमन्नलाङ्गदमुखैः सार्धञ्च शत्रूच्छिदं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१३

प्रत्यूहोत्तरणं सपत्नविजयं प्राप्तुञ्च माहेश्वरीं
श्रीदुर्गां विधिवत प्रसाद्य शरदि प्रत्यग्रनीलोत्पलैः ।
लब्धाद्दैवबलाद्धतत्रिभुवनप्रत्यर्थिलङ्केश्वरं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१४

पौलस्त्यस्य सहान्वयस्य निधनात् सौभाग्यलक्ष्मीमुषं
लङ्काधाम्नि विभीषणस्य कृतसद्राज्याभिषेकोत्सवम् ।
वैदेह्याः कृतवह्निशुद्धिमपि च ब्रह्मादिकानां पुरः
श्रीरामं नयताभिराममखिलानन्दालयं संश्रये ॥१५

श्रीसुग्रीवविभीषणाङ्गदहनूमद्भिस्तथा चापरैः
कौवेरप्रणयेन पुष्पकरथं सभ्रातृदारं स्वयम् ।
आरुह्य प्रमुदा कृताम्बुधिचलत्कल्लोलमालात्ययं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१६

साकेतं प्रतिपद्य राजमुकुटं कौलञ्च सिंहासनं
सस्नेहं सचिवानुशिष्टमनिशं निर्वर्त्य राज्यावनम् ।
श्रुत्वा चारमुखादवर्णमपि तं निर्वासितात्मप्रियं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१७

दृष्ट्वा दैववशेन कालपुरुषं सन्त्यज्य हा ! लक्ष्मणं
दायादेषु विभज्य राज्यविभवान सर्वेषु निर्वेदतः ।
लीलान्ते सरयूपयस्यपि तनुं निक्षिप्य नाकं गतं
श्रीरामं नयनाभिराममखिलानन्दालयं संश्रये ॥१८

श्रीरामलीलामृतसंज्ञमेतत्
स्तोत्रं विकीर्णं खलु भक्तिभावात् ।
श्रीरामसीताङ्घ्रियुगेऽस्तु दुर्गा-
दासद्विजेनात्र चिरं विलग्नम् ॥१९

इति—श्रीरामलीलामृतस्तोत्रं समाप्तम् । ॐ तत् सत् ॥

---

वङ्गीयसंस्कृतशिक्षापरिषदः समावर्तनोत्सवे

परिषत्सभापतेः

माननीयविचारपति-न्यायभारती-श्रीप्रशान्तविहारि-

मुखोपाध्यायमहोदयानाम्

## अभिभाषणम्

समवेताः सुधियः !

अद्य अस्माकं वार्षिकं समावर्तनं पुनरागतम् । यदद्य वयम् अस्माकं स्वकीये वासभवने इदमनुष्ठानं सम्पादयितुम् अलम् अभवाम, तद् अस्मान् तितराम् आनन्दयति च सन्तोषयति च । इयं भूमिः—यत्र वयम् अद्य समवेताः—सेयं संस्कृतसाहित्यस्य पुण्यभूमिः । एकाधिकायाः शताब्द्याः संस्कारेण स्मृत्या च पवित्रीकृतेयं भूमिः । इतिहासस्य संस्कृतशिक्षायाश्च स्मरणीयम् इदं स्थानम् । अत एव अस्माकम् आशा वर्तते—यथास्या भूमेः पुरा स्मरणीय इतिहासः सृष्टस्तथा तदीयस्मृत्या समनुप्राणिता वयं भविष्यत्कालस्य कृते गौरवान्वितम् इतिहासं रचयितुं समर्था भविष्यामः । भगवान् अस्माकम् अस्मिन् शुभे सङ्कल्पे सहायो भवत्विति प्रार्थयामहे ।

अद्यतने अस्मिन्ननुष्ठाने अस्माकं परिषद् आदर्श उद्देश्यञ्च स्मर्तुं युज्येते, भूयश्च युज्यते—संस्कृतसभ्यतायां, संस्कृतसाहित्ये, संस्कृत-

शिक्षायाः प्रसारे वृद्धौ च अस्माकं आत्मविश्वासो घोषयितुम्। आत्मविश्वासः सर्वासां सिद्धीनां मूलम्।

युगेऽस्मिन् देशस्य सामाजिकजीवने शिक्षाजीवने च संस्कृतशिक्षाया उपयोगिता सार्थकता च क्रमशः परिस्फुटन्त्यो वर्तते। यद् अज्ञानतिमिरं संस्कृतसभ्यतायाः शिक्षायाश्च विशालम् आदर्शं सम्पदञ्च अस्मान् व्यस्मारयत, तदद्य सौभाग्यात् शनैः शनैरपसृतं भवति।

सम्प्रति भारतवर्षस्य प्रधानसचिवः श्रीमान् जहरलालनेहरुः कतिपयैः स्पष्टवाक्यैः गभीरभावमयभाषया च संस्कृतमधिकृत्य भाषणं प्रदत्तवान् अतिसुन्दरं व्यक्तीकृतवांश्च संस्कृतशिक्षाविषये समग्रस्य देशस्य आशाम् आकाङ्क्षाञ्च। शृण्वन्तु भवन्तः स यद् ब्रवीति :—

"यद्यहमद्य केनापि पृष्टः स्यां यत् का नाम भारतस्य सर्वश्रेष्ठा सम्पत् ? किं वा भारतस्य अमूल्यम् अवदानम् इति ; तर्ह्यहं द्विधाभावहीनेन चेतसा निःसन्देहं वक्ष्यामि,—तन्नाम संस्कृतसाहित्यं, संस्कृतभाषा तदन्तर्निहिता विषयाश्च। इयम् अतिगौरवोज्ज्वला सम्पत्। यावदियं सम्पद् वर्तते, यावच्चेयं देशीयजनगणानां जीवनं परिचालयिष्यति तावद् भारतस्य जातीयप्रतिभा अक्षुण्णा स्थास्यतीति।"

अस्याः परिषद आदर्शश्च प्रधानसचिवस्य पूर्वोल्लिखितवाण्या समुज्ज्वलं वर्णितः। भारतस्य स्वीयजातीयप्रतिभाया भित्तिः संस्कृतसाहित्यस्य संस्कृतभाषायाश्च उपरि प्रतिष्ठिता वर्तते। भारतस्य अपूर्वं दर्शनम्, अपूर्वं काव्यम्, अपूर्वं साहित्यम्, आश्चर्यं समाजविज्ञानम्, निःस्वार्थस्त्यागमण्डितः सेवादर्शः, तस्य विशालं विज्ञानं रसायने, शरीरतत्त्वे, गणिते, आयुर्वेदे, धनुर्वेदे, ज्योतिषे, योगदर्शने, द्रव्यविज्ञाने—अन्येष्वपि अगणितेषु ज्ञानविज्ञानशास्त्रेषु। एतत् सर्वम् एव संस्कृतभाषया निर्मितं व्यक्तं परिपुष्टञ्च। अत एव संस्कृतभाषा—भारतस्य निजा भाषा यस्या माध्यमेन भारतवर्षं तदीयं ज्ञानगरिमाणम् असृजत। संस्कृतभाषा भारतस्य प्राणाः।

व्यतीतवर्षीया घटनापरम्परा संस्कृतशिक्षायाः क्रमोन्नतिविधौ विशेषतः स्मरणीयताम् आपन्ना। भारतवर्षस्य जातीयाकाशे तथाविधाः कियन्तः सङ्केता दृश्यन्ते, ये संस्कृतशिक्षाप्रसारान् सूचयन्ति।

तत्र प्राथम्येन समुल्लेखयोग्या घटना—कुरुक्षेत्रे ऐकस्य संस्कृतविश्व-विद्यालयस्य संस्थापनम्। भारतस्य शिक्षाजीवने सुमहदस्य तात्पर्यम्। अनेन खलु संस्कृतविश्वविद्यालयस्थापनेन एतद्देशीयेषु ये नाम संस्कृत-शिक्षायाः संस्कृतभाषायाश्च विशेषेण अनुरागिणो वर्तन्ते, ते तावन्नवीनया आशया समुज्जीविता वर्तन्ते आशासते च नचिरेणैव कालेन भारतस्य सुदूरस्थितेषु विभिन्नस्थानेषु ईदृशानामपरेषामपि कतिपयविश्वविद्यालयानां संस्थापनम्। एवञ्च सति देशे संस्कृतशिक्षायाः संस्कृतभाषायाश्चोत्तरोत्तरं महान् प्रसारो भविष्यति।

द्वितीयतश्च, देशीयराष्ट्रपक्षस्यापि संस्कृतशिक्षां प्रति कश्चन नवीनोऽ-नुरागो दृश्यते। महतीयं भाग्यसूचना। एतस्य प्रमाणतया संस्कृता-योगसंस्था समुल्लेखमर्हति। सेयं संस्था भारतराष्ट्राधिकारेण घटिता तस्यैव राष्ट्राधिकारस्य अनुमत्या—"कथं देशे संस्कृतशिक्षा पुनरावर्तयितुं शक्या, कथं वा यथारीति सा चलितुं शक्नुयादि"ति निर्धारयितुं प्रवृत्ता। संस्थाया अस्याः सदस्याश्च एतदर्थं भारतस्य विभिन्नेषु प्रदेशेषु पर्यटन्तः कुत्र केन पथा संस्कृतशिक्षयाः सुयोगः सुविधा च वर्तते, कथं वा तस्यास्तादृशी समुन्नतिः कर्तुं शक्यते यया समुन्नत्या संस्कृतं तस्य समुचितं स्थानम् अधिकुर्यादित्याद्यनुसन्दधते। ते देशीयैः संस्कृतशिक्षानुरागिभिः सहालोचनं कुर्वन्ति। अस्यां नगर्याम् आगत्य ते भवतां सभापतिना, कतिपयकार्यनिर्वाहकसदस्यैः कर्मसचिवेन च सहालोचनं समाप्य प्रतिगताः। आशास्यते एभिस्तथाविधः सिद्धान्तः कृतो भवेत् येन देशस्य संस्कृत-शिक्षायाः स्थायिनी समुन्नतिः संसाध्येत।

एतद्वर्षीया अपरापि काचन घटना मयोल्लिख्यते। सा वर्षेऽस्मिन् कलिकाता-वम्बे-माद्राज-प्रमुखाणां केषाञ्चन विश्वविद्यालयानां शतवार्षिक

उत्सवः। तेन च मनसि स्फुरति तेषां विश्वविद्यालयानां गतशताब्दीगतः कीर्तिकलापः। त इमे विश्वविद्यालया आङ्गलाधिकारकाले अस्मद्देशीयानां मनीषिणां साहचर्येण संस्थापिता आसन्। भारतीयशिक्षायाः पुरावृत्ते एतेषां विश्वविद्यालयानां दानममूल्यम्। अत्र विशेषतो वक्तव्यमिदं यत्, ते देशे कञ्चन नवीनं प्रबोधमानीय एकम् उन्नतयुगं प्रवर्तयितुं समर्था आसन्, यस्य फलेनाद्य भारतं स्वावलम्बि स्वाधीनम्। वयं पुनरपि कस्मिंश्चन युगसन्धौ समुपस्थिताः। अस्मिन् विशालस्य युगपरिवर्तस्य माहेन्द्रक्षणे के नाम नवीनस्य ज्ञानयुगस्य मार्गदर्शका भविष्यन्तीत्ययं प्रश्नः।

मम तावदभिमतम्—केवलः संस्कृतविश्वविद्यालय एव तस्य पथस्तस्य नवीनयुगस्य च निर्देशं दातुमर्हति। अस्य नवीनयुगस्याविर्भावस्तदैव सम्भवेत् यदा समग्रे भारते एकः प्राणवान् ऐक्यबोधः समागच्छेत्, यदा च सर्वेषु समाजेषु आदर्शजीवने, शान्तौ सेवायां त्यागे च वयम् अस्माकं श्रद्धां विश्वासञ्च पुनरासादयेम। संस्कृतशिक्षयैव वयं यथार्थं भारतीयैक्यबोधं मर्मणि अनुभवेम, येन क्षुद्रबुद्धिप्रणोदितोऽस्माकं भेदबोधः काले विलोपम् आसादयेत। संस्कृतशिक्षायां संस्कृतसभ्यतायां, च संस्कृतस्य साहित्ये, दर्शने, विज्ञाने, च य आदर्शो वर्तते स एवाद्य विक्षुब्धेऽस्मिन् विश्वे आदर्शशान्तिमयं ज्ञानोज्ज्वलं सार्थक-कर्म-मण्डितं च मानवसमाजं घटयितुं प्रभवति। भारतस्यान्तर्लीना आशा गभीरतमा चिन्ता शाश्वती ध्यानधारा चेति सर्वमेव वस्तु संस्कृतभाषायां प्रकाशं प्राप्तम्। उच्चारिता च सेयं भाषा तुषारधौतात् हिमाचलशिखरात् सागरधौतां कन्याकुमारिकां यावत्।

अत एवाहं ब्रवीमि, भारतस्य विभिन्नेषु प्रख्यात-शिक्षाकेन्द्रेषु कलिकाता-बम्बे-मद्रप्रमुखेषु संस्कृतविश्वविद्यालयाः स्थापनीयाः। तेन देशस्य देशवासिनाञ्च अशेषं कल्याणं भविष्यति, भविष्यति च भारतीयस्य नवप्रबोधस्य नवाभ्युदयस्य च सहायता। पश्चिमवङ्ग-

प्रधानमन्त्री डाः विधानचन्द्रराय: सम्प्रति देशेऽस्मिन् विभिन्नान विश्वविद्यालयान् संस्थापयितुं व्रती वर्तते। येन समाजस्य क्रमोन्नतिः साधिता स्यात्। अत एवाद्य श्रूयते देशेऽस्मिन् यन्त्रतान्त्रिकविश्वविद्यालया ग्राम्यविश्वविद्यालयाश्च न चिरात् स्थापिता भवेयुरिति। एतेषां नवनवानां विश्वविद्यालयानां स्थापनावसरे यदि कश्चन संस्कृतविश्वविद्यालयः सृज्येत तर्हि देशीया शिक्षापद्धतिः सर्वाङ्गीणां कुशलतां परिपूर्णताञ्च समर्जयितुं शक्नुयात इत्यहं मन्ये, वेदयामि चैतदर्थम् अनुनयं मम च संस्कृतशिक्षा-परिषदश्च पश्चिमवङ्गीयराष्ट्राधिकारेषु। इतिहासे श्रूयते वङ्गदेशोऽयं बहुशिक्षाया बहुभावधाराया बहुविद्यायाश्चालयो जन्मभूमिश्च। अस्माद् देशादुद्भूता नैका ज्ञाननिर्झरिण्यः समग्रं भारतं नवजीवनदानेन समजीवयन्। अत एवाद्य मे प्रत्याशा वर्तते यत् संस्कृतविश्वविद्यालयं संस्थाप्य देशोऽयं पुनरपि तस्य नेतृत्वस्य तस्या दूरदर्शितायाश्च परिचयं प्रदास्यति। ( क्रमशः )

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## सप्तमाङ्के

### तृतीयदृश्यपटः

ततः प्रविशति गायन्ती गुरुभक्तिः।

गीतम्

अभया गुरुपदसेवा
यो गुरुमच्चति कुशलं स भजति
तस्य हि तुष्टा देवाः॥

तस्य न चेतसि तिमिरम्,
ज्ञानं विलसति न चिरम्,
विघ्ना यान्ति च दूरम्,
तस्य सपत्नः को वा ?
भक्त ! समेहि मदङ्कम्,
क्षालय मानसपङ्कम्,
भज गुरुमिह निःशङ्कम्,
भुवि तव चिन्ता का वा ?

अहो ! वत्सो मे उपमन्युः कात्यायनेनोह्यमानः पञ्चवटीकुञ्जं नीतः पुरश्चरणव्यापृतो वर्त्तते। तत्तत्र गत्वा सुचिरादनशनादिक्लिष्टस्यास्य शरीरमनुप्रविश्य किञ्चित् कष्टप्रतीकारं करोमि। वत्स ! उपमन्यो ! समाश्वसिहि, दिष्ट्या न चिरेणैव सिद्धिं गन्तासि।

(अन्तर्हिता)।

---

चतुर्थदृश्यपटः

( ततः प्रविशतः पूपमादाय अश्विनीकुमारौ पुरश्चरणव्यापृतश्चोपमन्युः)

अश्विनीकुमारौ—वत्स ! उपमन्यो ! एतावावामश्विनीकुमारौ स्ववैंद्यौ पुरश्चरणारम्भ एव गुरुभक्तिपूते त्वयि परं प्रीतौ स्वः। सम्पूर्णं तावत्तैव तव मन्त्रपुरश्चरणम्, इदानीमुत्तिष्ठ वत्स !

उपमन्युः—अये ! एतावश्विनीकुमारौ स्ववैंद्यौ ! अहो मे भाग्यम् ! अथवा गुरोर्भगवत एवैष प्रसादः ! अयि भगवन्तावश्विनीकुमारौ !

प्रणमत्युपमन्युर्वामन्धो गुरुपदानुगः।
रूपादर्शनदुःखेन मलिनीकृतमानसः॥

नमो युवाभ्यां यदुपाश्रयेण
देवाश्चिरं निर्जरसश्चरन्ति ।
यन्नामतो रोगगणा द्रवन्ति
कुरङ्गबाला इव सिंहभीताः
नमो नमो वां प्रियदर्शनाभ्यां
दिव्यावदानेन यशःसिताभ्याम् ।
कारुण्यपीयूषरसाञ्चिताभ्यां
स्वभक्तकामे सुरपादपाभ्याम् ।
नमोऽस्तु वां पादयुगाय जिष्णवे
नमोऽस्तु पादाम्बुजयुग्मरेणवे ।
नमोऽस्तु वां विस्मयहेतुभूतये
नमो नमो वां शुभशक्तये नमः ॥

अश्विनीकुमारौ—वत्स ! उपमन्यो ! आन्ध्येन साम्प्रतमपि दुःखं मा गाः । एतमपूपं गृहाण । अनेन भुज्यमानेनैव तवेदमान्ध्यं विनिवर्त्तेत ।

उपमन्युः—दीयतां दीयतामेषः !

अश्विनीकुमारौ—एष गृह्यताम् ।

उपमन्युः—( गृहीत्वा ) अहो ! भगवतोः प्रसादः ! भगवन्तावाश्विनेयौ !

निष्किञ्चनोऽस्मि बालोऽस्मि कृतवेदितया नतः ।
गृह्यतां भक्तिपूर्णा मे प्रणिपातपरम्परा ॥

अश्विनीकुमारौ—वत्स ! भक्त्या परिकल्पितः प्रणतिपर्यायः खलु सकलसपर्योपचारमर्यादा । तदलं सङ्कोचेन । वत्स !

सादरं पूपमास्वाद्य स्वच्छमासाद्य दर्शनम् ।
स्वस्तिमान् सुचिरं भूया गुरोः सन्तोषमावहन् ॥

वत्स ! अतपरमस्मत्प्रदत्तपूपोपयोगेन व्यतीतान्ध्यः समुत्कण्ठितं गुरुं मातरञ्च त्वरितमभिवन्दस्व। आवामिदानीं स्वपदं प्रपद्यावहे। ( अन्तर्हितौ )।

उपमन्युः—अयि भगवन्तौ ! ( क्षणं स्थित्वा ) हे भगवन्तौ ! ( प्रतीक्ष्य ) अपि प्रस्थितावेव भगवन्तौ ?

अश्विनीकुमारौ—वत्स ! उपमन्यो ! स्वपदप्रस्थानार्थमावां गगनमार्गमाश्रितौ स्वः। नातःपरमावां प्राप्स्यथ। त्वमस्मद्वचसि प्रत्ययमाधाय यथादिष्टमनुतिष्ठ। येन निश्चितं श्रेयो लप्स्यसे।

उपमन्युः—एष गृहीतः शिरसा भगवदादेशः।

अश्विनीकुमारौ—स्वस्ति वत्सायोपमन्यवे गुरुभक्ताय।

उपमन्युः—सुतरामनुगृहीतोऽस्मि। भगवन्तावाश्विनेयौ ! (उत्तरमलब्ध्वा) नूनमेतौ सम्प्रति वचनवाह्यौ जातौ। अहो ! मन्ये सम्प्रति प्रभाता रजनी ! तथाहि,—

प्राभातिको मङ्गलमन्त्रपाठः
संश्रूयते रम्यतरो वटूनाम्।
खाद्यार्थमाराद् व्रजतां खगानां
कोलाहलो दीव्यति शावकानाम्॥

अहो ! महता भाग्येन यद्यपि लब्धोऽयमान्ध्यनिवर्त्तकः पूपखण्डो ना सत्याभ्यामुपनीतः प्राप्तश्च पूपमेनं भुङ्क्ष्वेति भगवतोरादेशः, तथापि कथमेनमनिवेद्य गुरवे भक्षयिष्यामि ? किञ्च वृत्तये केवलं शीर्णं वृक्षपत्रमेव समादिष्टं मे भगवता गुरुणा, तदयं पूपस्ततो भिन्नः सुतरामनुपयुक्तो भोक्तुम्। तदयं गुरवे निवेद्यः। एवं स्थिते क्वनु खलु साम्प्रतं भगवन्तं लभेय ? मदीयमन्त्रपुरश्चरणविघ्नपरिजिहीर्षया पञ्चवटीकुञ्जसमीपमपहाय शिष्यगणसमभिव्याहृतो भगवान दूरमाश्रमभागमध्यास्ते। तत् कथमिदानीं तमुपसर्पामि ? ( क्षणं विचिन्त्य ) आं दृष्टम्। आर्यं कात्यायनमाहूय

तेनैव सहायभूतेन भगवन्तमुपसर्पयम्। तत् तमेव तारं समाकारयामि। (प्रकाशम्) आर्य कात्यायन! आर्य कात्यायन! क्वासि? एष उपमन्युरहं त्वामामन्त्रयामि।

(नेपथ्ये—कात्यायनः—अये! उपमन्युरयं व्याहरति! स्वरेण प्रहृष्ट इवासौ लक्ष्यते। तत् किं सफलकृत्यो मे वयस्यः? भवतु, प्रतिवचनेन सम्भावयामि। (प्रकाशम्) वयस्य! उपमन्यो! एषोऽस्मि, एष आगच्छामि)।

उपमन्युः—अहो! नातिदूर एव आर्यकात्यायनः! तत् नूनं दिष्ट्या वर्द्धामहे।

(ततः प्रविशतिससम्भ्रमं सहर्षः कात्यायनः)।

कात्यायनः—वयस्य! उपमन्यो! प्रहृष्ट इव लक्ष्यसे। अपि नाम सिद्धः कामः?

उपमन्युः—आर्य अथ किम्। दिष्ट्या लब्धो दस्रयोः प्रसादः।

कात्यायनः—तत् किमद्याप्यनुवृत्तमान्ध्यम्?

उपमन्युः—(कर्णे) एवमेवम्।

कात्यायनः—वयस्य! तदलं कालात्ययेन। एहि, सत्वरं भगवन्तमुपसर्पावः।

उपमन्युः—अत एव भवानाकारितः। तदवलम्बस्व माम्।

कात्यायनः—एहि वयस्य! एष प्रसारितः करः, एनं गृहीत्वा शनैः शनैरागच्छ।

उपमन्युः—एवं करोमि। (तथा करोति)।

उभौ—'जयन्ति नः श्रीगुरुपादरेणवः'। (निष्क्रान्तौ)।

(क्रमशः)

---

# ग्रन्थसमालोचना

समालोचकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः

( समालोचनार्थमवश्यं ग्रन्थद्वयं प्रेषणीयम् )

श्रीचैतन्यचरितामृतग्रन्थस्य संस्कृतपद्यानुवादः (आदिलीला) वर्धमान-मण्डलान्तर्गतकालनानगरावस्थितानन्दाश्रमाश्रितश्रीमत्स्वामिभास्करानन्द-सरस्वतीविरचितः। प्रथमसंस्करणम्। मूल्यं रूप्यकपञ्चकमात्रम्। कलिकाता ओरियेण्टाल प्रेस ( प्राइभेट् ) लिः इत्यस्मान्मुद्रायन्त्रात् वि, ए, वि, एल् इत्युपाधिकेन श्रीक्षेत्रनाथ डाङ्गाली घोष महोदयेन, ७वि गोराचाँद वसु रोड् कलिकाता ६। इत्यस्मात् प्रकाशितः।

वैष्णवकुलचक्रवर्तिप्रभुपादश्रीमत्कृष्णदासकविराजगोस्वामिप्रणीतस्य वङ्गवाङ्मयात्मकस्य चैतन्यचरितामृतनामधेयस्य सुप्रसिद्धग्रन्थस्य परिचयं के नाम न जानन्ति। श्रीलवृन्दावनदासविरचितचैतन्यभागवतमनुसृत्य विरचितमपि चरितामृतं वैष्णवानां प्रमाणकोटौ श्रेष्ठत्वमावहति। पण्डितकुलचूड़ामणिना सुप्रसिद्धदार्शनिकेन महामहोपाध्यायश्रीमत्-कालीपदतर्काचार्य्यमहोदयेन संस्कृतभाषोपनिबद्धायां भूमिकायाम् एम, ए, वि, एस् सि, एम, वि, वि, एस्, डि, टि, एम्, इत्याद्युपाधिविभूषितेन प्राचीनादर्शानुरागिणा श्रीमत्कालीकिङ्करसेनगुप्तमहोदयेनाङ्गलभाषामय-भूमिकायां चानुवादग्रन्थस्यानुवादकर्तुश्च सविशेषं परिचयो दत्तः। ग्रन्थ-कर्त्रा "वङ्गीयवागविदुषां कृते"ऽनुवादस्य प्रयोजनं प्रदर्शितम्। वङ्गभाषा-विदोऽप्यस्माद् भावग्रहणसौकर्य्यमनुभवेयुरिति निर्विवादम्। मूल-चरितामृतस्य वङ्गभाषापि न सुखबोध्या, भावोऽपि न सुखाधिगम्यः। संस्कृतानुवादस्य भाषा प्राञ्जला भावावबोधे नितरामुपयोगिनी च।

ग्रन्तकृतप्रणीत'तरणीविहारा'दिग्रन्थाध्ययनेन ग्रन्थकारस्य मौलिकं कवित्वं सुपरिज्ञातमस्माभिः। सोऽयं ग्रन्थकारः सर्वथा प्रवीणोऽपि यद्येतदनुवाद-कृत्यं सम्पूर्णं कर्तुं प्रभवेत् तदा संस्कृतसाहित्यधनभाण्डागारं प्रोज्ज्वलेन रत्न-खण्डेन सम्पन्नं स्यादिति तस्य निरामयं दीर्घजीवनं परमेशसमीपे काम्यते। अधुना ग्रन्थप्रकाशनं बहुव्ययायाससाध्यं सुतरां मूल्यं किञ्चिदधिकमपि भक्तैः सोढ़व्यम्। ग्रन्थरत्ने मुद्राकरप्रमादोऽपि नाकिञ्चित्करः। आशास्महे संस्करणान्तरे प्रमादानामेतेषां स्थानं न भविष्यतीति यथा प्रचारबाहुल्येन संस्करणान्तरस्य सत्वरं प्रयोजनं स्यात् तदर्थमस्य बहुलः प्रचारः काम्यते। इति



9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4. for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for member-

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramas nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkaharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladēva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kali ada Tarkach rya, Rs, 5;Rs, 4-8 (for members).

